त्यागी भोगी विवेकी विनयनययुतः साधुसत्संगरङ्गः(?)
समक्षेत्राया(?) करणसंफलितस्वीयलक्ष्म्या विलासः ॥५॥

सोनाकस्वपते सौभुखधनसहितस्तदजते (?)
निरतातनाभिद्वीनासाधुः प्र—णेस्तृतीयश्च (?) ॥६॥

यथाक्रमेण भार्याः सुकराणी विशदलसदमृत-
वाणी जीवादेवी दयिता तथाऽमरादेविनाम्नास्ताः ॥७॥

पितृव्यसाववाल्हास्वमारङ्हाश्राविका सुशीलगुणा ।
एवं बहुविधपरिकरसहितेन सदानमहितेन ॥८॥

सुतसहसधारसंयुतसौवर्णिकमण्डनेन पुण्यवती ।
हासलदेवीति जाया पुण्यार्थं लेखितं विमलम् ॥९॥

शुचिविवाहप्रज्ञप्तीपञ्चमाङ्गपरिस्फुटम् ।
सद्वाच्यं वाच्यमानं तु चिरं जयतु भूतले ॥१०॥

चारित्रश्रीनिवासेऽतुलविमलगुणे श्रीतपापक्षवासे
निस्सीमामदगच्छाभ्युदयपरिलसद्भाग्यसौभाग्यभाजः ।
श्रीलक्ष्मीसागराः श्रीगुरुगुणकलिताः सूरयः सूरितुल्याः ।
सौख्याधीतप्रवीप्रववहववता उसवंशे बभवुः ॥११॥

तत्पट्टे श्रीगुरवः पूज्यश्रीसुमतिसाधुसूरिवराः ।
तत्पट्टपूर्वगिरिवरविभासने नव्यभानुमत्ये ॥१२॥

संप्रति विजयवती श्रीकमलश्रीहेमविमलसूरीणाम् ।
पूजाप्राज्ये राज्ये निर्मलचारित्रसाम्राज्ये ॥१३॥

विज्ञावतंसा विबुधेन्द्रलक्ष्मीभद्रप्रभुश्रीगुरवो विरेजुः ।
तच्छिष्यमुख्याः किल पण्डितश्रीआणंदमाणिक्यगुरूत्तमाश्च ॥१४॥

तत्तदीयविनेयतां श्रीअङ्गासुतसमुद्रबिबुधानाम् ।
वहरायितं प्रमोदादन्येपि च वाचयंतु चिरम् ॥१५॥

नन्देषु षोडशेषु प्रमिते(१५५९)? वर्षे नरेन्द्रविक्रमतः माघमासे कृष्णपक्षे ५ भोमवासरे संवत् १६५९ वर्षे मागसर सुदि ५ भौमे वासरे अणहिल्ल-पट्टणे श्रीविवाहपन्नत्तीनाम अङ्गः संपूर्णः स्वोपकारायालेखि ॥ शुभं भवतु लेपक-पाठकयोः । पस्वाव्वोच्चर सूलपंमासारणलकृतम् ? ॥

( पश्चात्कालीनोल्लेखः— )

संवत् १८५१ वर्षे शाके १७१६ प्रवर्त्तमाने कार्त्तिकमासे विशदपक्षे सप्तम्यां कर्मवाटयां पूज्यमहर्षिश्रीहरचन्द्र [ चित्कोषे शाह श्री ] मिहालचं[द]-जित्बुधसिंघजित्काख्येन श्रद्धालुना भगवतीसूत्रसंपृक्तटीका प्रदत्ता ॥ परम-न्यानि पुस्तकानि प्रदत्तानि ।

[ 265 ] **अन्तः**— संवत् १५७९ वर्षे माघवदि ९ सोमे । अद्येह श्रीअणहिल्लपुरवास्तव्यसश्रीकेण श्रीखरतरगच्छे श्रीजिनभद्रसूरिपट्टे श्रीजिनचन्द्रसूरिपट्टे श्रीजिनसमुद्रसूरिस्तत्पट्टे श्रीजिनहंससूरीश्वराणां श्रीभगवतीपञ्चमाङ्गवृत्तिर्लेखयित्वा विहारिता ॥

श्रीश्रीमालज्ञातीयआचवाडियागोत्रे मन्त्रिधणपति-पुत्रमंत्री गुणराज-भार्याकन्हाईसुश्राविका-पुत्ररत्नमन्त्रिश्रीराजभुश्रावकेण पुत्ररत्नमन्त्रिलटकम-मन्त्रिसहसकरण-पौत्रमन्त्रिविद्याधर-मन्त्रिलक्ष्मीधरप्रमुखपरिवारसश्रीकेण तदनु श्रीजेसलमेरौ संवत् १६०६ वर्षे श्रजिनमाणिक्यसूरीश्वररवाचि किञ्चदशोधि, श्रीसंघाध्यक्षं व्याख्यानावसरे व्याख्यायि च ।

[ 266 ] **अन्तः**— श्रीश्रीमालकुलाम्बुजे दिनकरो धन्यो धरामण्डनं
नानाचारविचारचारुचतुरो जीवादितत्त्वार्थवित् ।
सम्यग्दर्शनधारको व्र[त]धरः सर्वार्थिदेवद्रुमो
मन्त्रीशः सुगुणैरलंकृततनुर्देवाभिधानोऽभवत् ॥१॥

तस्याभवद्गुणै रम्या स्वकुलानन्ददायिनी ।
गोमतिनाम्नी दयिता सती श्राद्धीशिरोमणिः ॥२॥
पुत्रस्तदीयो विलसद्विभूतिः सत्पुण्यपीयूषपवित्रमूर्त्तिः ।
लेजूपतिः शीलधरः समस्ति हर्षाभिधो हर्षकरो नराणाम् ॥३॥
इतश्च –

श्रीश्रीमालकुलाम्बुजजन्मदिनपो लोकोपकारी सदा
विख्यातः स्वगुणैर्विशेषधवलैः श्रीदेवराजाङ्गजः ।
श्रीजगडू-जगसिंहपूर्वजमहापुंरत्नसंस्मारकः
श्रद्धावान् हरिचन्द एष सततं जीयान्महीमण्डले ॥४॥

तत्पत्नी जिनराजधर्मनिपुणोभयपक्षशुद्धा सदा
हंसीवोज्ज्वलमानसा शुभतमश्राद्धीगुणैः पूरिता ।
सर्वज्ञोक्तव्रतादिपालनविधौ संतत्परा सन्मुदा
रत्नाई इति नामतो विजयते भूमण्डले साम्प्रतम् ॥५॥

श्रीपूर्णिमापक्षपयोधिचन्द्राः शीलेन संनिर्जितस्थूलभद्राः ।
सूरीश्वराः श्रीभुवनप्रभाख्या जयन्तु नित्यं जगतीतलेऽस्मिन् ॥६॥
लिखाप्य निजपुण्यार्थं भगवतीवृत्तिपुस्तकम् ।
हर्षेण रत्नवत्या च दत्तं स्वगुरवे मुदा ॥७॥
षट्-रस-पञ्च-पृथिवीसंख्ये [१५६६] वर्षे च श्रावणे मासि ।
प्रतिपद्दिवसे लिखितं पुस्तकमेतच्चिरं जीयात् ॥८॥

॥ इति प्रशस्तिः ॥

[ 267 ] **अन्तः**— लिखितं श्रीअणहिल्लपुरपत्तनमध्ये ॥
संवत् १६५८ वर्षे कार्त्तिक वदि १४ शुक्रवारे लिखितम् । तपागच्छे पं०

श्रीलीहविमलगणिलिखापितम् मु० कृष्णा मुनिवर्धमानलिखितम् ॥
( अपरेण तावल्लिखितमिदम्-)

इदं भगवतीसूत्रवृत्तिमहाशास्त्रमणहिल्लपुरपत्तनकुम्भारीयापाटकवास्तव्येन सोनीसाथान्वयज्ञातश्रेष्ठिवर्यनिहालचन्द्रात्मजेन श्रेष्ठिवर्यश्रीलहेरुचन्द्रेण आत्मनः पावलबाई नाम्न्याः स्वधर्मपत्न्याश्च श्रेयो निमित्तं विक्रम संवत् २००१ वर्षे कार्तिकमासे कृष्णपक्षे द्वितीयातिथौ गुरुवासरे मूल्येन गृहित्वा तपागच्छाधिराजश्रीमद्विजयानन्दसूरीशशिष्यप्रवर्त्तकश्रीकान्तिविजयांतेवासिमुनिवर्यश्रीमच्चतुरविजयचरणसरोजचञ्चरीकाय मुनिपुण्यविजयाय स्वाध्यायार्थमुपदीकृतमिति जयतु श्रीसंघभट्टारकः ॥

[ 269 ] **अन्तः**— संवत् १५७६ वर्षे मार्गशीर्ष वदि १३ सोमे ॥ ग्रन्थाग्रं... लिखतम् ॥ सा० ... लिखापिता ॥ ॥

जोसी गोवालीलिखितम् ।

[ 270 ] **आदिः**— ॥ ॐ ॥ श्रीपार्श्वनाथं प्रणम्य ।
नवमशतस्य द्वात्रिंशत्तमोद्देशकस्य टीकानुसारेण वाचनाचार्यश्रीराजसमुद्रगणिभिः क्रियते विवरणम् । तत्र सूत्रे चतुर्णां प्रवेशकानां मध्ये नारकप्रवेशनद्वारस्य विवरणम् ।

[ 275 ] **स्त०आदिः**— ॥ ॐ ॥ श्रीवीतरागाय नमः ॥

श्रीश्रेयः श्रीसेवितांह्रिसकलसुखकरः श्रीजिनः सिंहलक्ष्म्या
स्फूर्जत्सिद्धार्थराजप्रथितकुलवियद्भासनद्वादशात्मा ।
सद्भक्त्या नम्रकम्रत्रिदशवरवधूलोचनानन्दकारी
प्रोच्चैस्तारुण्यपुण्यः स भवतु सततं श्रेयसे त्रैशलेयः ॥१॥

यन्नाममन्त्रस्मरणप्रभावात् समीहितार्थाः सफलं व्रजन्ति ।
भव्यव्रजानेकमधुव्रतानां स वीरसार्वो दिशतु प्रसिद्धिम् ॥२॥

प्रत्यूहव्यूहवार्धिप्रशमननिरतं गौतमस्वामिनं च
तत्त्वातत्त्वार्थसिद्ध्यै निजगुरुचरणाम्भोरुहं भक्तिपूर्वम् ।
यां श्रुत्वा भव्यवर्गो भवति भगवतीं मोक्षमार्गानुसारी
तस्याहं वच्मि टीकां प्रबलजडधियां बोधनार्थं स्वबुद्ध्या ॥३॥

विद्वद्वादिविवादलब्धसुयशःपुष्टस्फुरत्केसरा-
श्चातुर्विध्यसुधर्म्मचारुकथकाः संपादिताङ्गिहिताः ।
प्रोद्दंडप्रबलप्रतापमदनोद्यद्दन्तिपञ्चाननाः
श्रीसूरीश्वरदेवरत्नगुरव आसन् प्रभूतप्रभाः ॥४॥

वाचकततिमौलिमुकुटा निजबुद्ध्या जितबृहस्पतिस्माराः ।
श्रीराजसुन्दराख्यास्तेषां शिष्याः समाचाराः ॥५॥
तच्चरणयमलकमलोपासनषट्चरणसत्प्रमेदमुदा (? ।
सद्वाचकपद्मसुन्दरगणिनेयं विनिर्मिता टीका ॥६॥

स्त०अन्तः— संवत् १७९३ वर्षे माघमासे कृष्णपक्षे पञ्चमीतिथौ चन्द्रवासरे श्रीभटनेरमध्ये लिपीकृतं भगवतीटबार्थः संपूर्णः ॥

प्रणम्य श्रीमहावीरं गौतमं गणनायकम् ।
श्रुतदेवीप्रसादेन मया हि स्तबुकः कृतः ॥१॥
श्रीपञ्चमाङ्गसूत्रस्य टीकां दृष्ट्वा सुबोधिनीम् ।
श्रीअभयदेवकृतां यथामत्यनुसारतः ॥२॥

श्रीमद्बृहत्तपागच्छनायकसकलभट्टारकश्रेणिभूषणश्री५श्रीभट्टारकश्रीधनरत्नसूरीश्वरपट्टालंकारभ०श्रीअमररत्नसूरीश्वरपट्टो[द्]द्योतकारिभ०श्रीदेवरत्नसूरीश्वरपट्टप्रभाकरभ०जयरत्नसू[री]श्वरपट्टपूर्वाचलसहस्रकिरणोपमभट्टारकश्रीभुवनकीर्त्तिसूरिपट्टप्रभावकभट्टारकविद्यमानभट्टारकश्रेणिमुकुटायमानचतुर्दशविद्याविनोदरञ्जितानेकभूपालसुकृतगात्रचारित्रपात्रभट्टारकश्री५श्रीरत्नकीर्त्तिसूरिविजयराज्ये तद्गच्छे भ०श्रीदेवरत्नसूरिसूरीश्वरशिष्योपाध्यायश्रीराजसुन्दरगणिचरणकमलभ्रमरतुल्येनोपाध्यायश्रीपद्मसुन्दरगणिना स्वज्ञानावरणी[य]कर्मक्षयार्थे श्रीपञ्चमाङ्गस्य श्रीभगवतीसूत्रस्य नामधेयस्य स्तबुकविवरणं कृतम्। यत्किञ्चित्सिद्धान्तविरुद्धं प्रकाशितं तज्जातपातकस्य मिथ्यादुष्कृतोऽस्तु । धीमद्भिः संशोधनीयं कृपां कृत्वा, यतः–सन्तः शुद्धाः स्वभावतः परकार्यकृतोद्यमाः ।

अक्खरमत्ताहीणं यं किंचि पढियं अयाणमाणेणं ।
तं खमह मज्झ सव्वं जिणवयणविणंग(णिग्ग)या वाणी ॥१॥
अथ संवत् वेद-ग्रह-सायर-शशि(१४९४) पौषमाससुखकार ।
शुक्लपक्षतिथिपंचमी शुभवेला रविवार ॥१॥

बृहत्खरतरगच्छे श्रीक्षेमशाखायां महोपाध्याय श्री१०५ श्रीश्रीरत्नसोमरजोगणि–तत्शिष्यमुख्यपण्डितप्र०महिमामूर्तिगणिभ्रातृजशिष्य पं० हस्तरत्नभ्रातृ पं० ऋद्धरत्नभ्रातृ पं० ज्ञानकल्लोलभ्रातृ पं० मुनिकल्लोलादिसहितेन लिपीकृता श्रीभट्नेरमध्ये ॥

[ 276 ] अन्तः— समत उगणीस आठकी साल सुकल पक्ष सीस काती सुद तीत्थ पुनं बारस ने सरवार, लषतु कृष्णगढ सहर मधे (अत्राभिधानं केनचिद् प्रभ्रष्टम् ।)

[ 280 ] आदिः— ॥ ॐ ॥ श्रीशारदाई(यै) नमः ॥ अथ श्रीभगवतीबीजकं लिख्यते ॥

प्रणम्य परया भक्त्या परमान् परमेष्ठिनः ।
कुर्व्वे हर्षकुलाख्योहं भगवत्यंगबीजकम् ॥१॥

अन्तः— इति श्रीभगवत्याख्यपंचमांगबीजकं समाप्तं, ग्रंथाग्रम् ४९० ॥

॥ संवत् १६९८ वरषे । शाके १५६३ प्रवर्त्तमाने पोषमासे ॥ कृष्णपक्षे दिशिमदिने ॥ श्रीपूर्णिमापक्षे प्रधानशाखायां श्रीढंढेरपाटके भट्टारकश्रीललितप्रभसूरि–तत्पट्टे श्रीपूज्यश्रीश्रीश्रीविनयसूरिविजयराज्ये तत् शिष्यमुनिहेमराजलिखितम् ॥ श्रीअणहल्लपुरपत्तनमध्ये लिखितम् ॥
मुनिवरश्रीकीर्त्तिरत्नादिवाच्यमानं चिरं नंद्या(नन्द्या)त् ॥श्रीः॥ कल्याणमस्तु ॥
॥ श्रीश्रीकेशवकपाठकयोः ॥ श्रीरस्तु ॥१

[281] **आदिः**— ॥ ॐ ॥ प्रणम्य परया भक्त्या परमान् परमेष्ठिनः ।
कुर्वे हर्षकुलाख्योऽहं भगवत्यङ्गबीजकम् ॥१॥

**अन्तः**— इति भगवत्याख्यपंचमाङ्गबीजकं समाप्तम् ॥ ग्रं० ४९० ॥ श्रीपण्डित श(शि)रोमणिश्रीतपागच्छे गच्छाधिपतिश्रीहेमविमलसूरिः, तस्य शिष्य-पं० हर्षकुलकृतं बीजकम् ॥ ह० भीमसागर ॥

श्रीनृपविक्रमादित्यसंवत् १६४७ वर्षे शाके १५१२ प्रवर्त्त० श्रावणवदि० १४ भौमे । ग्रं० स्यास्त्र (शास्त्रं) संपूर्णं लषीतं (लिखितम्) । शुभं भवतु ॥

[287] **अन्तः**— संवत् १५८४ वर्षे मार्गशिर वदि १२ दिने बुधवारे श्रीकोरंटकीयगच्छे षा० ... ... ... ... ज्ञाताधर्म्मकथाङ्ग लिषापितम् । आचन्द्रार्क्कं नन्द्यात् ॥

[290] **अन्तः**— (मूलादर्शलेखनसमयानन्तरमिदं केनचिद् लिखितम्-)
वरडीया गूजरमल्लजी ज्ञातावृत्तिः एषा ज्ञानवृद्धिहेतवे ज्ञानभक्तिकृते दत्ता पं० नन्दलाल-तत्शिष्यपं०चन्द्रजसाभ्यां श्रीविक्रमपुरे ॥

[291] **वृ० आदिः**— श्रीसरस्वत्यै नमः ॥

मत्वा वीरजिनं शचीशमहितं सज्ज्ञानरत्नप्रदं
मोहोन्मत्तमतङ्गजातिबलवच्छार्दूलसिंहोपमम् ।
अंहोध्वान्तविनाशनग्रहपतिं कर्मारिविध्वंसकं
संसाराब्धिनिमग्नविश्वभविनामालम्बनं निष्क्रियम् ॥१॥
सविद्यागुणदायकां सुमतिदां ध्यात्वा सुरीं भारतीं
श्रीमद्भक्तिविलाससुन्दरमहोपाध्यायशिष्यो मुनिः ।
सिद्धान्तार्थविदां सतामनुचरः कस्तूरचन्द्राभिधः
ज्ञाताधर्मकथाङ्गविवृतिमहं कुर्वेऽर्थशो दीपिकाम् ॥२॥
यद्यपि पूर्वं वृत्तिरस्त्यभयदेवसूरिकृता ।
अनिभिहितार्थसूत्रस्य प्रयासो विधीयतेऽर्थाय ॥३॥

अथेदं ज्ञाताधर्मकथाख्यं षष्ठमङ्गं तस्य पूर्वमभयदेवसूरिकृतवृत्तिरतिगम्भीरैरल्पाक्षरैर्व्याख्याता प्रायः सैवास्ति परं मन्दबुद्धीनामनुग्रहाय तदवशिष्टसूत्रस्य सविस्तरं व्याख्यानमातन्यते—

**अन्तः**— अथ ग्रन्थकृत्प्रशस्तिः—

पूर्वशासनसुरीदत्तवरैर्नवाङ्गवृत्तिकृद्भिरतिशयज्ञानवद्भिः श्रीमदभयदेवसूरिभिरस्याङ्गस्य प्रदेशतोऽतिगहनपदानां संक्षिप्त[त]रा वृत्तिः कृतास्ति, सापि चास्यामेवान्तर्भूता, अवशिष्टानां पदानां च स्वमत्यनुसारेण सद्गुरूणां प्रसादात् त्वियं दीपिका कृता, तद्विनेयजनानुग्रहाय यत्पुनरावृत्तपदानां भूयोभूयोर्थः कृतस्तन्निरुपयोगिनां महामन्दबुद्धीनामत्यन्तसुखबोधार्थं तेषामिदानीं तथाविधतीव्रतरोपयोगाभावाद् येषां पदानां सकृदर्थः सम्यक् ज्ञातः पुनस्तेषां पदानां व्याख्यावसरे स्मृतिस्तादृशी न भवति बुद्धिहीनत्वात् प्रतिसमयं सर्वेषां हानिरेवेति भगवद्वचनप्रामाण्यात् त्विति ।

गच्छे स्वच्छतरे बृहत्खरतरे प्रोद्यत्प्रतापाधिके
श्रीमच्छ्रीजिनचन्द्रसूरिगुरवो जाता जगद्विश्रुताः ।
श्रीदिल्लीपतिपातसाहयवनो यैर्बोधितो लीलया
दत्ता येन युगप्रधानपदवी हृष्टेन तेषां गुणैः ॥१॥

तेषां च शिष्यः सकलादिचन्द्रो वाचंयमानां धुरि कीर्त्तनीयः ।
तपोविधानादिसुकृत्यपूर्ण आसीत् क्रियावत्सु वरो विनीतः ॥२॥

तच्छिष्यः समयादिसुन्दरमहोपाध्यायमुख्यो गुणी
संवेगात्मकरञ्जरञ्जिततनुर्निश्शेषशास्त्रार्थवित् ।
तच्छाखाप्रसृता च नैव विशदा न्यग्रोधवद्विस्तरा
शास्त्रानेकविधायको मुनिवरः ख्यातः पृथिव्यामभूत् ॥३॥

तच्छिष्यो रामचन्द्राह्वः गुणी च धीमतां वरः ।
चारित्राराधकः श्रीमानण(न)गारशिरोमणिः ॥४॥

तत्सद्विनेयो वरपाठकश्च काश्यादिदासः श्रुतसारविद्वान् ।
तच्छिष्यकः ठाकुरसीति नाम्नाऽभूद् वाचकः शास्त्रसुवाचनाकृत् ॥५॥

तच्छिष्यः शीलसंपन्नो वाचकः कीर्त्तिवर्द्धनः ।
विश्वविद्यावतां वर्यः सर्वसिद्धान्तमर्मवित् ॥६॥

तदनु विनयधर्मी वाचनाचार्यमुख्यः
अमरविमलनामा कोविदश्रेणिवन्द्यः ।
सकलमुनिवरीयान् मन्त्रविद्यागरीयान्
गुणजलनिधिभूतोऽभूच्च चारित्रधर्त्ता ॥७॥

वाचको नेमचन्द्राख्यस्तद्विनेयो मुनिर्गुणी ।
कर्त्ता प्रचुरशास्त्राणां हर्त्ता पञ्चशरस्य च ॥८॥

तच्छिष्यो वरवाचको यतिवरो भूमीशमान्योऽनिशं
श्रीमद्भक्तिविलाससंज्ञकभिषक्श्रेष्ठस्तथा दैववान् ।
शिष्यानेकविधायको गुणगणानां स्वामिभूतः किल
विख्यातो भुवि विश्वलोकमहितो वर्वर्त्ति विद्यानिधिः ॥९॥

तच्छिष्यो जयरत्ननामविबुधश्चारित्रधर्मोद्यतः
तन्निर्देशकरो विनेयवचनः कस्तूरचन्द्राभिधः ।
तेनाकारि च दीपिकातिसुगमा षष्ठाङ्गसंबन्धिका
राज्ये श्रीजिनहेमसूरिगणिनां संविद्यमाने सति ॥१०॥

नन्द-नन्द-वसु-भूमि(१८९९)वत्सरे विक्रमार्कनृपवत्सरात् तथा ।
आश्विने च सितपक्षे गुरौ रामचन्द्रजयवासरे शुभे ॥११॥

श्रीमज्जयपुरनगरे प्रारब्धा निजप्रतिभानुसारात् ।
इन्द्रपूर्यां नगर्यां मालवदेशे च सिद्धेयम् ॥१२॥

यावन्मेरुर्धरापीठे यावज्जैनेन्द्रशासनम् ।
वाच्यमाना चिरं तावन्नन्द्यात् जगति दीपिका ॥१३॥

इह हि गमनिकार्थं यन्मया सूहयोर्क्तं
　　किमपि समयहीनं तद्विशोध्यं सुधीभिः ।
न हि भवति विधेया सर्वथास्मिन्नुपेक्षा
　　दयितु (?) जिनमतानां तायिनां चाज्ञिवर्गे ॥१४॥

परेषां दुर्लक्षा भवति हि [वि]वक्षा स्फुटमिदं
　　विशेषाद् वृद्धाना[म]तुलवचनज्ञानमहसाम् ।
निराम्नायाधीतिः(ती) पुनरतितरां मादृशजनैः(नः)
　　त(कु)तः शास्त्रार्थे मे वचनमनयं दुर्लभमिह ? ॥१५॥
ततः सिद्धान्ततत्त्वज्ञैः स्वयमूह्यः प्रयत्न[तः] ।
न पुनरस्मदाख्यात एव ।ह्यो नियोगतः ॥१६॥

[ 293 ] **आदिः**— ॥ ॐ ॥
　　प्रणम्य श्रीमहावीरं स्मृत्वा चैव सरस्वतीम् ।
　　वन्दे सद्गुरुपादाब्जं स्तवुको किञ्चिदुच्यते ॥१॥
　　ज्ञाताधर्मकथाङ्गस्य सुखबोधैकहेतवे ।
　　स्वात्मपरोपकाराय सन्तस्येच्छानुभावतः ॥२॥

**अन्तः**— इह हि स्तवुके यन्मया किञ्चिन्न्यूनमुक्तं यत्किञ्चित् समयहीनमुक्तं तत्सर्वं सुधीभिः विशोध्य इह श्रुतवतां हास्यास्पदं एषा बालक्रीडेव मया कृता सन्तैः समर्थनीया इति ।

अथ वर्धमानस्वामिपट्टे श्रीसुधर्मास्वामी तदनुक्रमेण श्रीवज्रस्वामी तच्छिष्य-श्रीचन्द्रसूरिरभवत् । तस्माच्चन्द्रकुलोत्पत्तिः । तत्र चन्द्रकुले क्रमागतश्रीचैत्र-गच्छोऽजनि । तस्मिन् चैत्रगच्छे भुवनेन्दुसूरिः तच्छिष्यतत्पट्टे श्रीदेवप्रभसूरीश्वरः येन तपाबिरुदः कृतः । तदनुक्रमेण श्रीवृद्धतपागच्छे संप्रति वर्त्तमानश्रीदेवरत्न-सूरीश्वरपट्टप्रभावकश्रीश्रीश्रीजयरत्नसूरीश्वरविजयमानराज्ये महोपाध्यायश्रीविद्यारत्न-गणिविनयी उपाध्यायश्रीकनकसुन्दरगणिना कृतं श्रीज्ञाताधर्मकथानकस्य स्तवुक-विवरणं किञ्चिन्मात्रं संपूर्णम् ॥

छ ॥ विक्रमात् संवत्सर चन्द्र … … … … …॥

[ 294 ] **मू०अन्तः**— संवत् १७३३ वर्षे शाके १५९८ प्रवर्त्तमाने ज्येष्ठवदि
　　**स्त०अन्तः**— आसुमासे सुक्लदशमीदिने वारशुक्रे ॥

[ 298 ] **अन्तः**— लिखितं श्रीवा०जयनिधानेन शिष्य पं० कमलसिंहपठनार्थम् ।

[ 301 ] **अन्तः**— संवत् १६६८ वर्षे वैशाखसुदि षष्ठी पुष्यार्कयोगे लिखितम् । श्रीतपागच्छे श्रीविजयसेनसूरिराज्ये पं०देवविजयगणिवाचनार्थम् , अहिमदावादवास्तव्य-ओसवालज्ञातीय-वृद्धशाखाया साह … पाल भार्याबाई … मदे पुत्रसाहजेठा-लिखापितम् ।
　　श्रीदेवविजयविदुषां शिष्यैर्धनविजयगणिमुनि[ भिः ] ।
　　श्रीमत्खाकंदरपुरे चित्कोशे प्रतिरियं मुक्ता ॥१॥

[ 302 ] **अन्तः**— ग्रन्थाग्रम् ८१२॥

श्रीमच्चन्द्रयशोगणिविनेयमाणिक्यचन्द्रगणयोऽमी ।
इदमुदयचन्द्रनाम्ना तच्छिष्याणां कृतेऽलेखि ॥१॥

संवत् १५७५ वर्षे दक्ष(क्षि)णायने हेमन्तऋतौ कार्त्तिकमासे कृष्णपक्षे १३ रवौ लिषापितं वाडीनयरे ॥

[ 309 ] **अन्तः**— इति श्रीउपासकदशाङ्गसूत्रं समाप्तं । ग्रन्थाग्रन्थ ९१२ सूत्रमानम् ।

संवत् १८५६ वर्षे भाद्रपदमासे कृष्णपक्षे लपीकृतं ग्रामे लाटापुलीमधे(ध्ये) पोसालमध्ये वनारसश्री५श्रीनरसिंहजीतत्पदटे रायचन्दजी तत्पटे आचार्यश्री१०८ देवप्रभसूरीजी(सूरि)तत्पटे सि(शि)ष्यगुलाबभाईवीरचन्दपठनार्थ भाई नानजी-लषी(लिखितं) सि(शि)ष्यगुलाबचन्दजी ।

[ 312 ] **अन्तः**— श्रीअन्तगडदशांगशास्त्रं । ग्रन्थाग्रम् ९९९॥

संवत् १५६५ वर्षे आषाढसुदि १ दिने लिषितं तिआरामध्ये अल्लावदीषा-मराज्ये सा०जोगालिषापितं ॥

( अन्यदीयहस्तलिखितम्- )

स्वस्तिश्रीविक्रमसंवत् १६८९ वर्षे । श्रीद्वीपबन्दिरे । श्रीमत्तपागच्छे श्रीज्ञानकोशे श्रीदयाकुशलगणिभिः पुस्तकमिदं प्रदत्तम् ॥

[ 313 ] **अन्तः**— ग्रन्थाग्रम् श्लोकसंख्या ८९० सूत्र० ॥१॥

संवत् १७१९ वर्षे चैत्रवदि १३ दिने गणिश्रीउदयसागर-तत्शिष्यमुनि-वीरमसागरलिषतं(खितम्) ।

[ 315 ] **अन्तः**— ग्रन्थाग्रम् ७९५ ।

-सं० १६२७ आषाढमासे अणखलागडेनेताऽलिखत् (?) ।

[ 330 ] **अन्तः**— ग्रन्थसंख्या १९२ ॥ संवत् १८२७ वर्षे मीतीकार्तिकशुक्ल१०सोमवारे लिपीकृता ॥ श्रीडूगरिदुर्गे श्रीबहादरसिंघजीराज्ये इदं पुस्तिका लिखित्वा(ता) ॥ शुभं भवतु ॥

[ 332 ] **अन्तः**— ग्रन्थाग्रम् । १२५० ॥ श्री ॥

( हरतालेनाधोलिखितं प्रश्नस्थम्- )

श्रीअञ्चलगच्छे पण्डित पं०श्रीधनसागरगणिय: (?) स(शि)ष्य पं०माणिक्य-सागरमुनिनी प्रसादि प्रति सही ॥

[ 336 ] **अन्तः**— संवत् १६१८ वर्षे वैशाषवदि१४शुक्रे श्रीस्तंभतीर्थमध्ये जोसी शिवजी लिषितम् ।

[ 337 ] **अन्तः**— संवत् १६६६ वर्षे चैत्रवद७ गुरू लखतं पंडया सारणसुत गोपाल लक्षतम् ॥

[ 342 ] **अन्तः**— सकलपण्डितोत्तमप्रवरशिरोमणी पं०श्री१०८श्री-विशेषसागरगणि-तत्शिष्यसकल-पण्डितोत्तमप्रवरशिरोमणिपं०श्री१०७ श्री(? शि)वलसागर-तत्शिष्यपायरजरेणुवत् मुनिव(वि)नीतसागरगणिलिपिकृतम् ।

संवत् १८४९ वर्षे शाके १७१४ प्रवर्त्तमाने मासोत्तममासे आषाढमासे कृष्णपक्षे ४ ती(ति)थौ लिपिकृतम् ॥

[ 344 ] **अन्तः** — इति श्रीविपाकश्रुतदशांगं एक्कारसमं सम्मत्तं । ग्रं० १२१६ ॥

संवत् १५८१ वर्षे फागुणसुदि एकादशी रविवारे लिषितं श्रीमंडपगढमहादुर्गे श्रीतपागच्छनायकभट्टारकप्रभुश्री हेमविमलसूरिविजयराज्ये पूज्याराध्यपं० दानचारित्रगणि-तत्शिष्यपं० सौभाग्यविमलगणि-तत् सि(शि)ष्यसौभाग्यचारित्रमुनिपठनार्थम् ॥ लेषकसाहकडूआलिषितम् ॥ प्रति राजनागीणीरी छइ ।

[ 345 ] **अन्तः**— ग्रन्थाग्रं । १२५० ॥ श्री ॥

संवत् १६१७ वरखे जेष्ठसुदि ११ रवौ लखी(खि)तं बरहानपुरमधे(ध्ये) ।

[ 347 ] **अन्तः**— ए ग्रन्थाग्रंथः ९५१ ॥ श्रीः ॥

संवत् १६६५ वर्षे कार्त्तिकवदि १० गुरो लिखितं ऋषिकिसना आत्मार्थि(र्थी) त्रंबावतीनगरे ॥

[ 349 ] **पुष्पिका**— स्वस्ति श्रीविक्रमसंवत् १६८९ वर्षे श्रीद्वीपबन्दिरे श्रीमत्तपागच्छाधिराजभ०-श्रीविजयदेवसूरीश्वर-आचार्यप्रभुश्री५श्रीविजयसिंहसूरीश्वरयोर्विजयराज्ये श्रीज्ञानकोशे पं०श्रीकल्याणकुशलग०शिष्यपं०दयाकुशलगणिभिर्पुस्तकं लक्षमेकं साधिकं वाचनाय प्रदत्तम् । भव्याभि(भव्यै)र्वाच्यमानं सततं चिरं नन्दतात् ॥

[ 350 ] **अन्तः**— ( अन्यदीय हस्ताक्षरेण लिखितमिदम्- )

संवति १७१८ आषाढमासे शुक्लपक्षे पञ्चम्यां तिथौ श्रीआगरानाम्नि महानगरे वायडगोत्रीयसाह श्रीलक्ष्मीदासपुत्रसाहश्रीसुखदेवेन चिरंलालजीसहितेन पुस्तकमिदं ज्ञानवृद्धयर्थं प्रदत्तम् ॥

[ 351 ] **अन्तः**— संवत् १५९९ वर्षे शाके १४६४ प्रवर्त्तमाने कार्त्तिकमासे शुक्लपक्षे ६ षष्ठ्यां तिथौ शनिवासरे अद्येह श्रीपत्तनवास्तव्यढंढेरकुटुम्बे श्रीश्रीमालज्ञातीय-दोसीधना भार्या अमरादे सुतदोसी लि(ल)क्ष्मीदास-भार्याजीबाईसहितेन श्रीपूर्णिमापक्षे प्रधानशाखायां श्रीभट्टारकश्रीश्री ४ कमलप्रभसूरि-तत्पट्टे श्रीभट्टारकश्री-६ श्रीपुण्यप्रभसूरीणामुपदेशेन श्रीउवाईउपांगसूत्रं लिषाप्यते । स्वगुरुभ्यः प्रदत्तम् ।

[ 353 ] **अन्तः**— ॥ ग्रन्थाग्रं० ११७५ ॥ ( पश्चात्कालीनेयं लिपिः- )

प्रेमहंसजी मोतीहंसजी माणेकहंस ॥

[ 355 ] **अन्तः**— ( हस्तान्तरेण सूचितमिदम्- )

श्रीहीरविजयसूरिशिष्य-पं०कमलविजयग०-शिष्यशिवविजयगणीनी प्रति ॥

[ 358 ] **बाला०आदिः**— ॥ ॐ नमो श्रीगुरुभ्यो नमः ॥

प्रणम(म्य) श्रं महावीरं जीवराजं गुरुं तथा ।
औपपातिकसूत्रस्य वार्तिकं किञ्चिदुच्यते ॥१॥

**बाला० अन्तः**— इति श्रीआचारांगोपांगस्यौपपातिकाख्यस्य वार्त्तिकवृत्तिरूपदुर्गमार्थपद-बालावबोधः समाप्तः ॥

पूज्यमन्त्रं नमस्कृत्य बालानामुपकारकः ।
औपपातिकसूत्रस्य वार्त्तिको विहितो हि यः ॥१॥

इति श्रीमज्जीवर्षिगणिविनेयेन मोल्हकनाम्नौपपातिकसूत्रदुर्गमपदबालावबोधः कृतः संवत् १६६२ वर्षे द्वितीयचैत्रमासे कृष्णपक्षे एकादशीचन्द्रे ॥

संवत् १८२२ प०रामानन्दगणि उववाइसूत्र नीवा उजेणनगरमध्ये लिखितं ऋषिश्री५कान्हजीना शिष्य ऋषिचोकापठनार्थम् ।

[ 359 ] **स्त० आदिः—** श्रीपार्श्वनाथ पुरुषादानीनू नमः, नमस्कार हो तिणि कालि चउ आरानइ विषइ । तेण समय तेण प्रस्ताव अवसरनइ विषइ । चंपा एहवइ नामि नगरी, जिहां कर नथी ते, होत्था कहतां हुती, इम कह्यो । ग्रंथाग्रंथ १२००१ श्रीरस्तु ॥ श्रीबीकानेरम० ॥

इति श्रीउववाइउपांगस्य ष्ट(स्त)बुकं समाप्तम् । ए प्रथमोपांग टबउ व(थ)यउ । सूत्रार्थग्रन्थाग्रं० श्लोक ५४०० ॥ संमत(वत्) १९७[०] मीती भाद्रवा भ(ब)द ८॥

[ 360 ] **मू० अन्तः—** संवत् १७२२ वर्षे शाके १५८७ प्र० अश्विनि वदि ३ भोमे । श्रीपत्तनमध्ये श्रीपूर्णिमापक्षे प्रधानशाखायां भट्टारकश्रीविनयप्रभसूरिणा लिखितमिति ॥ शिष्यादीनां(दिभिः) वाच्यमानं चिरं नन्द्यात् ॥

**स्त० आदिः—** प्रणम्य श्रीमहावीरं वक्षे(क्ष्ये) सुगमहेतवे ।
औपपातिकोपांगस्य स्तबकः किंचि(कश्चि)दुच्यते ॥१॥

ग्रन्थाग्रम् ५५२५ । संवत् १७२२ वर्षे शाके पनरसत्यासीआ प्रवर्त्तमाने फागुणमासे सु(शु)क्लपक्षे नवमीतिथौ रविवासरे । श्रीपूनिमगच्छे ॥

[ 361 ] **स्त० आदिः—** वन्दित्वा श्रीजिनं पार्श्वं साधुरत्नं च सद्गुरुम् ।
करोमि राजचन्द्राख्यः आद्योपांगस्य वार्त्तिकम् ॥१॥

**स्त० अन्तः—** प्रथम उपांगकी पुस्तिका लिषि गोघावीमांहि ।
जेसी थी तेसी लषी वांक हमारो नांहि ॥१॥
इति उववाईउपांगसूत्रसंपूर्णं समाप्तम् ॥

**अन्तः—** संवत् १८२९ वर्षे भाद्रवमासे कृष्णपक्षे १० तिथौ भौमवासरे त्रतीय(तृतीय)प्रहरे संपूर्णं शिवायोगे संपूर्णम् ॥१॥

पण्डितोत्तमप्रवरपण्डितश्री१०८श्री ४ पं०श्रीअजितसागरगणि–तत्सीष्य(तत्-शिष्य)पं०श्रीकीर्त्तिसागरगणिः, तत्शिष्यपं०दानसागरग०–शिष्यपंश्रीविबुधसागरगणिः, तत्शिष्यपं०श्रीलाभसागरगणिः, तत्शिष्यपं०दोलतसागरगणिः, तत्शिष्यपं०रामसागरगणिः, तत्शिष्यपं०मानसागरगणिः, तत्शिष्यपं०रूपसागरलिखितं आत्मार्थे गोघावीमध्ये । ग्रन्थाग्रन्थम् ६०० ॥ जादर्स(यादृशं) पुस्तकं०—

यां लगे मेरू थीर रहे, जयवन्ता ससी भांण ।
त्यां लगे एही ज पुस्तिका, वांचो चतुर सुजांण ॥२॥

[ 362 ] **मू० अन्तः—** श्रीराजनगरे लिपि(पी)कृतं श्रीचिन्तामणिपार्श्वनाथप्रसादात् ।

**स्त० आदिः—** वन्दित्वा श्रीपार्श्वजिनं पार्श्वचन्द्रं च सद्गुरुम् ।
करोति पायचन्द्राख्य आद्योपांगस्य वार्त्तिकम् ॥
तेणइ काल अवसर्प्पिणी चउथा आरानइ विषइ ॥१॥

स्त० अन्तः— एतलइ श्रीउववाईय उपांगसूत्रनउं अर्थ संपूर्ण । सूत्रवार्तिक मिली सर्व ५००० श्लोक जाणिवा ॥ तैलथिकु पुस्तक विणसइ ॥

संवत् १६८१ वर्षे फाल्गुनवदि ८ रवौ लिखितम् । शुभं भवतु । जेहवुं पुस्तक आदि लषिउं छइ० ।

श्रीनगरमांहि मुख्यनगर श्रीअहमदाबाद ते राजनगर तिहां ग्रन्थ लखाणउ ।

[ 363 ] अन्तः— ग्रन्थाग्रं १८५० । संवत् १५६४ लर्षे दक्ष(क्षि)णायने शिशिरऋतौ पौषमासे कृष्णपक्षे पञ्चम्यां तिथौ भृगुवासरे श्रीअणहिल्लपुरपत्तने लिषापितम् ॥

[ 366 ] अन्तः— ग्रन्थाग्रम् २१२१ । शुभं भवतु । श्रीमंडोरपासजीप्रसादात् ।

[ 367 ] अन्तः— ग्रन्थाग्रम् २१२० । संवत् १५८२ वर्षे मार्गसिरशुदि १ बुधे साहश्रीवच्छासुत-साहसहस्रकिरणेन पुण्यार्थं पुस्तकमिदं गृहीतम् । सुतवर्द्धमानशांतिदासपरि-पालनार्थम् ॥

[ 368 ] अन्तः— ग्रन्थाग्रम् २२२० । संवत् १७४५ वर्षे शाके १६१० प्र० अश्विनमासे शुक्लपक्षे सप्तम्यां कर्म्मवाट्यां गुणविजयेन लिखितमिदं पुस्तकम् ।

टबाकारः— श्रीपार्श्वचन्द्रसूरि-पट्टालङ्कारश्रीसमरचन्द्रसूरि-पट्टोय(द्द्यो)तकारकश्रीराजचन्द्र-सूरिविजयमाने ऋषिश्रीश्रम(व)णस्य शिष्यवाचकमेघराजेन श्रीराजप्रश्नीयसूत्रस्य टबार्थः कृतः । अस्यैव(इयमेव) टीका ग्रन्थान्तरं विलोक्य लिखितमिदं(तेयम्) ॥

[ 371 ] मू० अन्तः— इति श्रीराजप्रश्नी[य]सूत्रम् । समाप्तोयं मन्थाग्रम्(मन्थः) २२२० सूत्रम् । संवत् १७६२ वर्षे शाके १६२८ प्रवर्त्तमाने प्रथम आसाढशुदि ७ गुरुवासरे लिखितं चेलालब्धिविमलपठनार्थं श्रेयः ।

स्त० अन्तः— श्रीपार्श्वचन्द्रसूरि-पट्टालङ्कारश्रीसमरचन्द्रसूरि-पट्टोद्योतकश्रीराजचन्द्र-सूरिविजयमाने ऋषिश्रीश्रवणस्य शिष्येन वाचकमेघराजेन श्रीराजप्रश्नीयउपांगस्य टबार्थो लिखितः । टबार्थः ३२६८, उभय मिलि ५३९२ । भाद्रपदकृष्णपक्ष ७ भौमवारे टबो संपूर्ण कीधो । श्रीपत्तननगरे दोसीवाडापाटके लिखितं ऋषि धर्मदासेन ।

[ 372 ] अन्तः— ग्रं० २२२० ॥ संवत् १६८९ वरिखे कार्तिकमासे महिममधे लिखतं ऋषिश्री ५ लाधाजी, तत्‌शिखे(ष्ये)न मुनिसूजालिखितम् ।

[ 373 ] अन्तः— संवत् १७६० वर्षे मिती कार्तिकशुदि १५ दिने भृगुवासरे श्रीजेसल-मेरमध्ये ।

[ 374 ] स्त० अन्तः— इति राजप्रश्नीयस्य टबार्थः संपूर्णः । ग्रन्थाग्रन्थसूत्रार्थ मिली ७००० छें । संवत् १८६१ ना वरषे ज्येष्ठमासे शुक्लपक्षे दशम्यां तिथौ भृगुवासरे श्रीभुजनगरमध्ये त्रवाडी श्रीछगनजीसुत-हरदेवेनेदं सूत्रं राजप्रश्नीयं संपूर्ण लिखितम् ।

[ 378 ] अन्तः— संवत् १६७२ वर्षे चैत्रसितात् श्रीअणहिल्लपत्तननगरमध्ये लिखापिता ।

[ 379 ] अन्तः— संवत् १६२९ वर्षे कार्तिकवदि ५ शुक्रे मृगशिरनक्षत्रे श्रीअंचलगच्छे

श्री ५ धर्ममूर्त्तिसूरिविजयराज्ये श्रीमेवातमंडले ...देशे ...नगरे श्री...ल[क्ष्मी ? ]उपाध्याय-स(शि)ष्यमु० माणिकराजेन लिषितं श्रीसूत्रं जीवाभिगमं स्वज्ञानावरणं [य]कर्मक्षमापनाय ।

[ 380 ] अन्तः—संवत् १६१० वर्षे पोसमासे शुक्लपक्षे पञ्चम्यां तिथौ गुरुवासरे अद्येह श्रीश्रीमालज्ञातीयसुगन्धीकुटुम्बे से० ह्रांसा-भार्यासुश्राविकासिरीआदे-पुत्र ३-धनजी १ कूवरजी२, शिवजी३पुत्रकुटुंबसहितैः से० सीचाकेनउपांगश्रीजीवाभिगमसूत्रं लिषाप्य श्रीपूर्णिमापक्षे प्रधानशाखायां भट्टारकपूज्यश्री ५ भुवनप्रभसूरिः, तत्पट्टे भट्टारकपूज्यश्री५कमलप्रभसूरिः, तत्पट्टे भट्टारकश्री५पुण्यप्रभसूरीणामुपदेशेन लिषाप्य स्वगुरुभ्यः प्रदत्तं वाच्यमानं चिरं जीयात् ।

[ 382 ] अन्तः— इति श्रीमलयगिरिविरचिता श्रीजीवाभिगमवृत्तिः समाप्ता । संवत् १९६४ रा मिती फागुणसुदी ६ रवीवारे । ली० व्यास कीस्तुरचन्द । ग्रन्थाग्रम् १९००० ॥

[ 383 ] स्त० आदिः— श्रीजिनाय नमः ॥

श्रीवीरं जिनं नत्वा केवलज्ञानभास्करम् ।
जि(जी)वाभिगमसूत्रस्य टबार्थः किंचि(कश्चि)दुच्यते ॥१॥

अ०० अखैराजमुनि चतुर्मासइं श्रीजैसलमैरनगरे लिपी० ॥

[ 387 ] अन्तः— संवत् १६११ वर्षे ज्येष्ठसुदि ७ सोमे अद्येह श्रीपत्तनवास्तव्यः श्रीश्रीमालज्ञातीयसुगन्धीकुटुम्बे सुगन्धी नाथा-सुतश्रेष्ठिहांसा-भार्यासुश्राविका-हांसलदे-पुत्र ४ श्रे० सूरिचन्द्र-से० सीचा-से० मेघा-सि० सिंधुसमस्तकुटुम्बयुतैः से० सीचाकेन श्रीपूर्णिमापक्षे प्रधानशाखायां भ० श्रीभुवनप्रभसूरि-तत्पट्टे भ० श्रीश्रीकमलप्रभसूरि-तत्पट्टे भ० श्री ५ पुण्यप्रभसूरीश्वराणां उपदेशेन श्रीपन्नवणाउपांगसूत्रं लिषाप्य स्वगुरुभ्यः प्रदत्तम् । वाच्यमानं चिरं जीयात् ।

[ 388 ] अन्तः— संवत् १५६५ संवत्सरप्रवर्त्तमाने दक्षिणायने शारदऋतौ भाद्रपदमासे कृष्णपक्षे चतुर्थ्यां तिथौ रविवासरे श्रीअणहिल्लपुरपत्तने लिखापितम् ॥

श्रीश्रीमालज्ञातीयश्रेष्ठिसहिजा-भार्याअदकूसुतेन श्रेष्ठिहरषाभिधेन प्रज्ञापनोपांगसूत्रं लिषाप्य स्वपुण्यार्थं परोपकाराय च श्रीपूर्णिमापक्षे प्रधानशाखायां श्रीभुवनप्रभसूरीणां प्रदत्तं चिरं नन्यात् ।

[ 391 ] मू० अन्तः— संवत् १८९४ रा वर्षे मि० चैत्र सुदि २ तिथौ भृगुवासरे ॥

टी० अन्तः— लि० गुसांई शंकर जती श्रीविक्रमपुरमध्ये ।

[ 392 ] स्त० रम्भः— प्रणम्य पुण्यं पदपद्मयुग्मं श्रीमन्महावीरजिनेश्वरस्य ।
कुर्वेऽल्पबुद्धेः सुखबोधरूपं प्रज्ञापनायाः स्तबुकार्थमुच्चैः ॥१॥
मलयगिरिसूरिविरचितवृत्त्यनुसारेण जीवविजयाह्वः ।
लोकानुभाषयाऽहं कुर्वे प्रज्ञापनास्तबुकम् ॥२॥
मन्दधिया वृत्ती( ? त्ति )भ्यः कठिनाभ्यो [illegible]
सुजस( ? सुवाच्यं ) नैव भवेत् सुगम [illegible] ॥३॥

[ 393 ] **अन्तः**— नमोऽस्तु वर्द्धमानाय नमः श्यामार्य्यसूरये ।
नमः सत्संप्रदा[ या ]य नमः सद्गुरवेऽनिशम् ॥१॥
श्रीमद्वाचकवंशमौलितिलकः श्यामार्यनामा प्रभु-
र्जीयात् पूर्वविदां वरः कलियुगे संभाव्य पूर्वच्युतिः( म् ) ।
निर्मथ्य श्रुतसागरं भगवता प्रज्ञापनारत्नकं
येनाविष्कृतमल्पमर्थबहुलं बोधाय भव्यागता( ? व्यांगिनाम् ) ॥२॥
प्रज्ञापनारत्नमिदं महार्थं वृत्त्यापि दुर्बोधमिति(? मतीव ) मत्वा ।
तन्द्रावतामल्पधियां सुखाय बोधाय तस्य स्तबुकः कृतोऽयम् ॥३॥
श्रीमत्तपामुख्यगणाधिराजाः सूरीश्व(श्व)राः श्रीविजयादिदेवाः ।
आसंस्ततः सर्वगुणोपपन्ना आचार्यवर्या विजयादिसिंहाः ॥४॥
तेषां पुण्यपदाम्भोजलुठद्रोलम्बसंनिभाः ।
विद्वांसो गजविजया विद्याख्यातिविभूषिता[ : ] ॥५॥
तेषां मुख्याः सि( शि )ष्याः गुणविजयाख्याः प्रकृष्टगुणकलिताः ।
विबुधश्रीहितविजया[ : ] सुविदितचिन्तामणिप्रथिताः ॥६॥
तत्पदपङ्कजमधुपाः ज्ञेयाः श्रीज्ञानविजयनामान[ : ]
तच्चरणाब्जसपर्यानिष्णातो जीवविजयबुधः ॥७॥
तेन मया स्तबुकार्थो विहितः प्रज्ञापनाख्यसूत्रस्य ।
श्रीमद्विक्रमभूपात् कृत-वसु-मुनि-चन्द्रमिति(१७८४) वर्षे ॥८॥
टीकानुसारेण पुरो पद्य... ... ... ।

[ 395 ] **बाःआदिः**— श्रीगुरुभ्यो नमः ॥
प्रणम्य श्रीमहावीरं नत्वाऽशेषसुरेश्वरम् ।
प्रज्ञापनाख्यसूत्रस्य वक्ष्येऽहं लोकवार्त्तय( तया ) ॥१॥
शान्तिसूरिबृहट्टीकादयो ग्रन्था मनोहराः ।
तथापि स्वपरशिष्यानां विनोदार्थं करोम्यहम् ॥२॥

**अन्तः**— इति पन्नवणा-सर्वसूत्रसमाप्तम् ॥
संवत् १९२० का मीती पोह(पौष) सुद १० वार सोमवार ॥

[ 396 ] **अन्तः**— समर्थिता प्रज्ञापनाटीका ग्रन्थाग्रम् १६००० ।

स्वस्ति श्रीजिनाय । संवत् १६०९ वर्षे चैत्र सुदि ५ दिने अद्येह श्रीपत्तनमध्ये श्रीश्रीमालज्ञातीयसुगन्धीकुटुम्बे श्रे०माथा-भा०नामलदे-सुत श्रे० हांसा-भार्यासुश्राविकाहांसलदे-पुत्र ४ श्रे० हरिचन्द्र १-से०सीचा २-से० मेघा ३-से०सिन्धू ४ पुत्रपौत्रमातृकुटुम्बसहितेन से०सीचा-भार्यासुश्राविका-सिरीयादे-पुत्रधनजी१-कुंवरजी २-शिवराजसहितेन सिरीयादेविनाम्न्या सुपुण्यार्थं श्रीप्रज्ञापनोपांगवृत्तिं लिखाप्य स्वपु(गु)रुश्रीपूर्णिमापक्षे प्रधानशाखायां भट्टारक-पूज्यश्री५भुवनप्रभसूरिः, तत्पट्टे भट्टारकप्रभुपूज्यः श्री ५ कमलप्रभसूरिः, तत्पट्टे

भट्टार[क]पूज्यश्री ५ पुण्यप्रभसूरीश्वराणामुपदेशेन पन्नवणावृत्ति लिखाप्य श्रे० सीचा-भा०सिरीयादे उभाभ्यां लिखाप्यास्य गुरुभ्य(रवे) प्रदत्तं, वाच्यमानं चिरं नन्दतु ।

[ 405 ] **अन्तः**— इति श्रीसूर्यप्रज्ञप्तिः समाप्ता । ग्रन्थाग्रम् २२०० ॥

संवत् १६५४ वर्षे माघमासे शुक्लपक्षे १३ तिथौ श्रीविक्रमनगरे । श्रीमद्बृहत्खरतरगच्छे श्रीजिनभद्रसूरिसंताने श्रीकमलसंयममहोपाध्यायानां शिष्य-श्रीमन्मेरुमहोपाध्यायानां शिष्यपं०श्रीमहिमसारगणीनां शिष्यमुख्य पं० श्रीरंग-वर्द्धनगणिवराणां शिष्यशिरोमणिप्रवरगुणमणिपं०श्रीकल्याणसागरगणीनां शिष्येण पं०राणाभिधेन मुनिनाऽलेखि प्रतिरियं वाच्यमाना चिरं नन्दतात् स्वपुण्यहेतवे लिखिता ॥

[ 407 ] **अन्तः**— इति चन्दपण्णत्ती सम्मत्ता, ग्रन्थाग्रम् १८५४ ॥

संवत् १५७० वर्षे चैत्रवदि १० बुधे लिखितम् ॥

( अन्यदीयहस्तेन लिखितमिदम्— )

उ० श्रीनन्दिविजयगणिशिष्यपं०श्रीविमलविजयगणिनी प्रति ॥

[ 409 ] **अन्तः**— इति जंबूद्दीवपण्णत्ती सम्मत्ता । ग्रन्थाग्रम् ४१५४ ॥

संवत् १७३० वर्षे कार्तिकमासे कृष्णपक्षे चतुर्थ्यां शनिवासरे रोहिणी-नक्षत्रे पूज्यपरमपूज्यप्रवरपण्डितश्रीमत्लुकागच्छे स्थिवरऋषिश्री ५ ग्रांम-णजी-शिष्यपूज्यतपस्वी ऋषिश्री ५ पांचाजी-तत्शिष्यलिखितं बल्द ग्रामपरबतसर-मध्ये ॥ तज्ज्ञैः संशोध्य वाच्यम् । कौरिकपत्र कोटेचा सा० तिलोकसी प्रदत्ता ।

[ 412 ] **अन्तः**— इति श्रीमत्तपागणगगनांगणगगनमणि( णी )समान-श्रीविजयदानसूरीश्वर-शिष्य-श्रीहीरविजयसूरिविरचितायां श्रीजम्बूद्वीपप्रज्ञप्तिवृत्तौ ज्योतिष्कवक्तव्यताधिकार-प्रतिबद्धश्चतुर्थोऽधिकारो व्याख्यातः ॥

[ 414 ] **स्त० आदि**— श्रीपार्श्वनाथाय नमः । श्रीसरस्वत्यै नमः ।

श्रीसिद्धार्थनराधिप[ : ] कुलाम्बरो[द्]द्योतनैकतिग्मांशौ( शुः ) ।
सर्वसुरासुरभासुरं( ? र )शेषरसंघट्टितांह्रिश्च ॥१॥

**अन्तः**— इति श्रीजम्बूद्वीपप्रज्ञप्तिसूत्रस्य गणिजीवविजय(येन) व्याकृतं संपूर्णम् ।

इति श्रीजंबूद्वीपप्रज्ञप्तिसंपूर्णं सकलभट्टारकपुरन्दर-शिरोमणिदिवाकर-समानभट्टारकश्रीसहस्र १ अष्टअधिकश्री १०८ श्रीविजयदेव[सूरी]श्वरजी, तत् शिष्यश्रीमहामहोपाध्यायसरव(सर्व)वगुणालंकृत्यं(त) उपाध्यायजी श्री १०८ श्रीशिर-सेहरा सकलवाचकशिरोमणिश्री उ०श्रीलावण्यविजयगणीनां शिष्यचरणसेवितसकल-वाचकशिरोमणिश्री १०५ श्रीउपाध्यायजी श्रीरत्नविजयगणीनां तत्शिष्यश्री पं० श्री १०१ श्रीपण्डितोत्तमसकलपण्डितशिरोमणिपं०श्रीखिमाविजयगणीनां, तत्शिष्यसकलपंडितशिरोमणिपंडितश्री ९९ श्रीनेमविजयगणीनां पाया(द)रजोरेणु-समानपण्डितश्रीग्या(ज्ञा)नविजयग०लखितं श्रीयं(श्रेयः) ।

[ 415 ] अन्तः— इति श्रीजंबूद्वीपप्रज्ञप्तिसूत्रं समाप्तम् । ग्रन्थाग्रन्थम् ८१८६ श्लोकाः । श्लोकसंख्या १५००० मानम् ।

श्रीमत्तपगच्छेशाः सूरिश्रीविजयदेवनामानः ।
आसंस्तेषां पट्टे सूरिश्रीविजयसिंहाख्याः ॥१॥

तेषां शिष्यप्रवराः कोविदकुलमौलिशेखरसदक्षाः ।
श्रीमज्जयविजयाख्याः बहुश्रुता विश्रुता जगति ॥२॥

तेषां शिष्याः प्रथमाः पण्डितगुणविजयसंज्ञि(ज्ञया) ख्याताः ।
विद्वांसो हिमविजया बुधजनविदेवो( ? दिता)ऽद्वितीयास्ते ॥३॥

तेषां विनेयमुख्याः प्रज्ञाः श्रीज्ञानविजयनामानः ।
तत्पदपङ्कजमधुकृत्विनयासु(नेयेषु) जीवविजयगणिः ॥४॥

तेन मया श्रीजंबूद्वीपप्रज्ञप्त्युपांगसूत्रस्य ।
स्तबुकार्थः संक्षेपाद् विनिर्मितः स्वपरबोधाय ॥५॥

संवति गगन-मुनीश्वर-मुनि-शशि(१७७०)वर्षेषु कार्तिके मासे ।
सितपक्षे सप्तम्या तिथौ च वाचस्पतौ वारे ॥६॥

सूत्रार्थोयं यद्वयलीको मया संविहितो च यत्र तत् ।
मयि कृपां संविधाय शोधितव्यः स कोविदैः ॥७॥ इति प्रशस्तिः ॥

इति श्रीजंबूद्वीपप्रज्ञप्त्युपुांगसूत्रटबार्थः । संपूर्णमिति । संवत् १७९७ वर्षे वैशाखमासे शुक्लपक्षे १ प्रतिपद(त)तिथौ बुधवारे । भट्टारकजंगमयुगप्रधानश्री५श्रीजिनराजसूरिजी शिष्यवाचकमानविजयगणि-शिष्यवाचकश्रीकमलहर्षगणि-तत्शिष्यग्रद्द्यासागरगणि-तच्छिष्यवा०ज्ञानप्रभगणि-शिष्यदेवविमलसहितेन लिखितम् । श्रीगारबदेसरमध्ये लिखिता प्रतिरियं शुभं भूयाल्लेखक-पाठकयोः ।

[ 417 ] अन्तः— बृहत्खरतरगच्छावतंसश्रीजिनहंससूरिशिष्यश्रीपुण्यसागरमहोपाध्यायविरचिता श्रीजम्बूद्वीपप्रज्ञप्तिवृत्तिः समाप्ता ॥

श्रीमच्चान्द्रकुले सुधर्मगणभृत्पट्टानुपूर्वीभवा
श्रीउद्योतनसूरयः समभवन् ज्ञानक्रियाशालिनः ।
ध्यानाराधितनागराट्प्रकटितश्रीसूरिमन्त्रस्फुर-
न्माहात्म्या गुरवस्ततो रुरुचिरे श्रीवर्द्धमानाभिधाः ॥१॥

श्रीमद्दुर्लभभूमिवल्लभसभाध्यक्षं पुरे पत्तने ।
वर्षे पुष्करदिग्गजात् ख-[व]सुधा(१०८८)संख्ये सुसंख्यावता ।
जित्वा चैत्यनिवासिनः खरतरेत्याख्यां समासादया-
मासे येन जिनेश्वरः स भवतात् सूरीश्वरः श्रेयसे ॥२॥

संवेगरंगशाला विनिर्ममे यैः कथानकरसाला ।
तेऽभूवन् जिनचन्द्राः सूरिवराः प्रणतनृपचन्द्राः ॥३॥

गुरुगमनयभङ्गीसंगरङ्गान्नवाङ्गी-
नवविवृतिविधानध्यक्तविस्फारकीर्तिः ।
सुगुरुरभयदेवः स्तंभनाधीशपार्श्व-
प्रकटनपटुरासीच्चक्रवर्ती बुधानाम् ॥४॥

चामुंडिकाप्रकटबोधनबद्धकक्षाः
सूत्रोक्तमार्गभणनाच्चरणैकदक्षाः ।
चित्ते वसन्तु जिनवल्लभनामधेयाः
सूरीश्वरा भुवनभासुरभामधेयाः ॥५॥

येषां रैवतकाचले कृततपः श्रीनागदेवाभिध-
श्राद्धाराधितयाऽम्बया किल युगप्राधान्यमाविःकृतम् ।
श्रीजैनेन्द्रमतप्रकाशनपटुप्रागल्भ्यलक्ष्मीजुष-
स्ते श्रीमज्जिनदत्तसूरिगुरवो यच्छन्तु मे वाञ्छितम् ॥६॥

तत्पदकमलमरालं ददतं फलमतुलमीप्सितविशालम् ।
नरमणिमण्डितभालं स्तवीमि जिनचन्द्रसुरसालम् ॥७॥

भूभृत्सभामध्यम[धा]ध्यगच्छद् वादेषु षट्त्रिंशतियं(कं) जयश्रीः ।
अभूत् स विद्वज्जनवृन्दचक्री ततस्ततश्रीजिनपतिसूरिः ॥८॥

श्रीमज्जिनेश्वरगुरुं जितवादियोधं
सूरीश्वरं तदनु नौमि जिनप्रबोधम् ।
श्रीजैनचन्द्रसुगुरुं नुतनिर्विशेषं
सद्देशनाकृतचतुर्नृपतिप्रबोधम् ॥९॥

यत्संस्मृतिप्रवणमानसमानवाना-
माविर्भवन्ति भुवि सर्वसुखप्रतानाः ।
प्रत्यूहसंहतिभुजङ्गमवैनतेयं
सूरिं जिनादिकुशलं तमहं भजेयम् ॥१०॥

जिनपद्मसूरिराजं जिनलब्धिगुरुं नतोत्तमसमाजम् ।
जिनचन्द्रं निर्व्याजं जिनोदयं नौमि जिनराजम् ॥११॥

पट्टे तदीये जिनभद्रसूरिः सौभाग्यभाग्यैकनिधिर्दिदीपे ।
सूत्रार्थजाम्बूनदसत्परीक्षाकषोपलप्रविशुद्धबुद्धिः ॥१२॥

निरुपमप्रतिभाप्रतिभासनः स जिनचन्द्रविभुः शुभवासनः ।
तदनु तस्य प्रशस्यगुणोदधिर्जिनसमुद्रगुरुः सुपदं दधिः ॥१३॥

तदीयपट्टाम्बुजराजहंसाः सुरप्रसादाप्तजनप्रशंसाः ।
विचक्षणश्रेणिशिरोवतंसाः कृतोल्लसन्मुक्तिरमाविलासाः ॥१४॥

वैधर्म्ये प्रथमांगस्य दीपिकार्थप्रदीपिका ।
ते जिनहंससूरीन्द्राः जीयासुर्गुरवो मम ॥१५॥ युग्मम् ।

तत्पट्टलक्ष्मीतिलकानुकारा बभूवुरद्दामगुणैरुदाराः ।
सूरीश्वरा लब्धनरेन्द्रमानाः श्रीजैनमाणिक्यवराभिधानाः ॥१६॥

तत्पट्टोदयशैलराजशिखरप्रद्योतनद्योतिनो
राजन्ते जिनचन्द्रसूरिगुरवस्ते सांप्रतं भूतले ।
यत्प्रौढप्रगटप्रतापमहिमामुद्वीक्ष्य विस्तारिणीम् ।
प्रोन्मादिप्रतिवादिकौशिककुलं त्रस्तं समस्तं क्षणात् ॥१७॥

संप्राप्य तदाशिषं श्रीजिनहंससूरिशिष्यवरैः ।
श्रीपुण्यसागरमहोपाध्यायैरल्पमतिगम्या ॥१८॥
एषा जंबूद्वीपप्रज्ञप्तेर्वृत्तिरादराद् विदधे ।
श्रीमत्पार्श्वजिनेश्वरनिजगुरुविशदप्रसादवशात् ॥१९॥

श्रीअभयदेवसूरि-श्रीमन्मलयगिरिकृतविविधवृत्तीः ।
सम्यग्विचार्य बुद्ध्या विलोक्य चान्यानि शास्त्राणि ॥२०॥ त्रिभिः कुलकम् ॥

वाचकाः पद्मराजाख्या अत्र साहाय्यकं विदधुः ।
तथा विशुद्धिमेतस्या युक्तायुक्तविवेचकाः ॥२१॥
आलस्यमपास्य निजं प्रथमादर्शे लिलेख सोल्लासम् ।
वृत्तिमिमां सन्महिमां विशुद्धधीर्ज्ञानतिलकगणिः ॥२२॥
मोहाद् यदत्राभिहितं विरुद्धं सत्संप्रदायस्य वियोगतो वा ।
दयालुचित्तैहृदयालुभिस्तन्मात्सर्यमुत्सार्य विशोधनीयम् ॥२३॥

श्रीमज्जेसलमेरुदुर्गनगरे श्रीभीमभूमीपतौ
राज्यं शासति बाण-वारिधि-रस-क्षोणि(१६४५)मिते वत्सरे ।
पुष्यार्के मधुमासि शुक्लदशमीसद्वासरे भासुरे ।
टीकेयं विहिता सदैव जयतादाचन्द्र-सूर्यं भुवि ॥२४॥

पञ्चदशसहस्राणि द्वे शते पञ्चसप्ततिः ।
प्रायेणास्या ग्रन्थमानं प्रत्यक्षरनिरूपणात् ॥२५॥ ग्रन्थाग्रम् १५२७५ ॥

संवत् १६५२ वर्षे ॥ राउलश्रीभीमविजयराज्ये युगप्रधानश्रीजिनचन्द्रसूरिसूरीश्वरविजयराज्ये आचार्यश्रीजिनसिंहसूरियौवराज्ये श्रीपुण्यसागरमहोपाध्यायानामुपदेशेन श्रीऊकेशवंशे श्रीशङ्खवालगोत्रे सा०कोचरसंताने सा०राजा-तत्पुत्रसा०-सीरंग-तत्पुत्रसा०रतनसी-सा०जइतसी-तत्पुत्रसा०थिरराजसुश्रावकेण स्वपितृश्रेयोर्थं ज्ञानभक्त्यर्थं च श्रीजेसलमेरुसत्कज्ञानकोशे श्रीजम्बूद्वीपप्रज्ञप्तिवृत्तिरेषा लेखिता । सा वाच्यमाना चिरं नन्दतु । शुभं भवतु ॥

[ 419 ] अन्तः— इति सकलसुविहितसैद्धान्तिकशिरोरत्नालंकारश्रीपार्श्वचन्द्रसूरि-तच्छिष्यश्रीविजयदेवसूरि-श्रीब्रह्मर्षिविरचितायां श्रीजम्बूद्वीपप्रज्ञप्तिटीकायां ज्योतिश्चक्रादिविचाराधिकारः समाप्तः परिपूर्णः ।

श्रीसाधुरत्नाभिधपंडितेशाः स्वकीर्तिविद्योतितसर्वदेशाः ।
यथास्थितं जैनमतं जनानां प्रकाशयन्तः सुखदा अभूवन् ॥१॥

तदीयपादाम्बुजयुग्ममृङ्गास्त्यक्ताखिलारम्भपरिग्रहौघाः ।
जयन्ति संवेगसुधैकपानाः श्रीपार्श्वचन्द्राभिधसूरयोऽमी ॥२॥

सूत्रं समालोक्य गुरोरर्थं यैः प्रकाशितः श्रीजगदीशपन्थाः ।
यमाश्रिता भव्यजना लभन्ति सुखं सुखानां परमश्रितांतम् ॥३॥
ये वादिनः कर्कशतर्कवित्तिस्तब्धाः स्वभिन्नानबुधान् विदन्ति ।
विलोक्य विद्यादिगुणैः समेतानेतान्नतास्तेऽपि भवन्ति सद्यः ॥४॥
एतेऽर्हतां चैत्यमुदाहरन्ति मुक्त्यर्थिभिर्मुक्तिनिमित्तमर्च्यम् ।
पुष्पादिपूजां चरितादिवादैः प्रकाशयन्तो न निषेधयन्ति ॥५॥
गीतार्था जिनशासने बहुतराः सन्त्येव साहित्ययुक्-
षट्तर्कीपरितर्ककर्कशतमप्रज्ञाबलोल्लासिनः ।
किन्त्वेतैः सदृशो न कोपि भुवने दृष्टः श्रुतो वा कृती
विज्ञाश्चेदनृतं वदाम्यहमिदं तत् कथ्यतामेष मे ॥६॥
तेषां गुरूणां गुणसागराणां श्रीपार्श्वचन्द्राभिधसूरिराजाम् ।
शिष्योस्त्ययं ब्रह्ममुनिर्विपश्चिच्चुलुक्यवंशोद्भवराजपुत्रः ॥७॥

इतश्च—
भुवि भूषणं जनपदो जयी गुर्जराभिधोऽनहिल्लपुरपत्तनं जयति नाम्ना परम् ।
स्फुरद्वरजिनालयैर्जिनवरेन्द्रपूजामिलन्महाजनमनो धनप्रमदपूरसंपूरकैः ॥८॥
टीकेयं तत्र कृता ब्रह्मविदा ब्रह्मसाधुनानेन ।
श्रीमज्जम्बूद्वीपप्रज्ञप्तेर्मतिमतामुचिता ॥९॥
यद्यपि जम्बूद्वीपप्रज्ञप्तिर्बहुतया गभीरार्था ।
व्याकर्तुमिह न शक्या विबुधैरपि किं पुनर्मनुजैः ॥१०॥
अर्थस्तथापि कथितो मया यदस्याः सुतुच्छमतिनापि ।
निजगुरुकरुणापूर्वाचार्यग्रन्थप्रभावोऽयम् ॥११॥

श्रीमद्विजयदेवाख्याः सूरयो विजितारयः ।
ये क्षमाराजिता नित्यमक्षमाराजिता भुवि ॥१२॥
धर्मस्नेहधरैरेषा शोधिता यत्नतोति( ? पि )तैः ।
न्याय-लक्षण-साहित्यप्रभृतिग्रन्थपारगैः ॥१३॥
जिनवरवचनविरुद्धं किमपि मया यत् प्रमादतो भणितम् ।
संशोध्यं विबुधवरैर्मिथ्या मे भवतु तद् दुरितम् ॥१४॥ त्रिभिर्विशेषकम् ॥
खेदः कोपि न तत्र नः खलजनो निन्दत्ययं यत्कृति
हर्षो नाप्यथवा स्वभावसुजनः स्तौति प्रकृत्यैव यत् ।
किन्त्वेतद्गुणभूषणे दृढतरे जातस्य एव स्तुति-
र्निन्दा वा भवतीह या मतिमतामेषैव मोदादिकृत् ॥१५॥

इति श्रीविजयदेवसूरिचरणप्रसादरचिता श्रीजम्बूद्वीपप्रज्ञप्तिटीका समाप्ता ।
संवत् १६०३ वर्षे कार्तिकवदि ३ बुधे लिखितं, म० राम-सुतमेघ-लिखितम् ॥

[ 422 ] अन्तः— वसु-लोचन-रवि( १२२८ )वर्षे श्रीमत्श्रीचन्द्रसूरिभिर्दृब्धा ।
आभड-वसाकवसतौ निरयावलिशास्त्रवृत्तिरियम् ॥१॥
मथुरायामुपांगपंचकस्य वृत्तिर्लिखिता ॥
संवत् १६११ वर्षे चैत्रमासे कृष्णपक्षे लिखितम्, ग्रन्थ० ३०१ ॥

[ 424 ] अन्तः— लिखितं गणिरामविजयेन निर्ज्जरार्थम् ।
संवत् १६५० वर्षे मार्गशीर्षसितद्वितीया गुरौ श्रीमति वीरमग्रामे ॥

[ 429 ] अन्तः— सं० १८०५ वर्षे वैशाषमासे शुक्लपक्षे त्रयोदश्यां भृगुवासरे
पू० ऋषिश्री ५ जेसिंघजी–तत्शिष्यलि० ऋ० फत्ता । वै० लिषमीचन्दवाचनार्थे ॥

[ 438 ] आदिः— ॥ नमः श्रीवर्द्धमानाय ।
त्रैलोक्यप्रकटप्रभावशुभगं भूष्णुप्रभं शोभते
ज्योतिर्यस्य स विश्वशस्यमहिमा श्रीवर्द्धमानः प्रभुः ।
सिद्धार्थान्वयवार्द्धिवर्द्धनविधुर्वन्धूकबन्धूल्लस-
त्पादाम्भोजनखद्युतिर्वितरतु श्रेयः सतां वत्सलः ॥१॥
निस्तन्द्रमुनिचन्द्राय समुद्राय शुभाम्भसाम् ।
नमः श्रीवीरभद्राय भद्राध्यासितबुद्धये ॥२॥

अन्तः— तथाहि इति उल्लेखो जितप्रमादमहारिश्चासौ वीरभद्रश्च जितप्रमादमहारि-
वीरभद्रस्तस्येदं तदेवोक्तलक्षणमध्ययनमध्यायेत्यादि शेषं पूर्ववत् ।
अथ गुरुसंप्रदायः–श्रीवीरजिनवरसत्कचतुर्दशसहस्रसाधुमध्यवर्त्तिश्रीवीरभद्र-
साधुकृतं चतुःशरणाख्यप्रकीर्णकमित्यर्थः । उक्तं च—
चउदसयसहस्साइं पयन्नाणं तु वद्धमाणस्स ।
सेसाण जत्तिया खलु सोस पत्तेयबुद्धा वा ॥
समाप्तं चतुःशरणाध्ययनविवरणम् ॥ ग्रन्थाग्रम् १०८० ॥

[ 440 ] अन्तः— परमगुरुभट्टारकश्रीसोमसुन्दरसूरिविरचिता संपूर्णा । श्रेयः सकलभट्टारक-पुरन्दरभट्टारकश्री१०८श्रीश्रीआनन्दविमलसूरिस्तत्शिष्यश्रीपर्वतऋषिः तत्शिष्यः पं० माणिक्योदयगणिस्तत्शिष्यपं०श्रीहर्षसोमगणिस्तत्शिष्य-पण्डितचक्रवर्त्तिचूडा-मणिपण्डितश्री५ श्रीऋद्धिसोमगणिस्तत्शिष्यपण्डितोत्तमपण्डितश्री५श्रीलब्धिसोमगणि-स्तत्शिष्यसकलगणिगणावतंशा(सा)यमानगणिश्री५श्रीललितसोमगणिस्तत्शिष्यसकल-गणिमजेन्द्रगणिश्री५श्रीअमृतसोमगणिशिष्यमुनिवृद्धिसोमेन लिपीकृतं श्रीमवन्तीपुरे संवत् १७५८ वर्षे शाके १६२३ प्रवर्त्तमाने मधुमासे १३ शुक्ल ज्ञवासरे शुभं भवतु श्रीः स्तात् ।

[ 443 ] मू० अन्तः— संवत् १६२६ वर्षे फागुणवदि चतुर्दश्यां शनिवासरे मीयापुरस्थानस्थेन
पं० हेमसिंहमुनिना लिलिखे स्ववाचनाय । शुभमस्तु ॥

[ 451 ] **स्त० आदिः**— ॥ ॐ श्रीवीतरागाय नमः । चउसरणअध्ययनमंगलरूप छें । एटला मार्टे भावमंगलरूप ६ कहवा ।

**अन्तः**— क० मोक्षना सुषनुं ६४ ॥ इति श्रीचउसरण अरथ संपूर्ण–समाप्तम् ।

[ 452 ] **अन्तः**— लिखितं पं०शिवचन्दखरतरेण ॥

संवत् १७७३ वर्षे माग[सि]र सुदि २ सोमवासरे ।

**बा० अन्तः**— ए श्रीवीरभद्रप्रणीत–रचित चोसरण प्रकरण संपूरणम् ॥

श्रीगुर्य्य(र्ज्ज)रदेशे श्रीअहंमदावादनगरे श्रीबृहत्खरतरगच्छे शुश्राव[क]पुण्यप्रभावि–(व)कसाहप्रेमचन्द तस्य भार्यापठनार्थं लिखितमस्ति ॥

[ 453 ] **मू० अन्तः**— अंचलगच्छे मुनि कीकाल(लि)खितं श्रीस्तंभतीर्थे ॥ संवत् १६९७ वर्षे फागण वदि ३ थावरवारे ॥

**स्त०अन्तः**— इति श्रीचउसरणअध्ययनलवलेस टबार्थं लिख्यु छइ ॥ श्रीअंचलगच्छे मु०श्रीवैराग्यसागरलिखितं थंभायतबिंदिरे ।

संवत् १६९७ वर्षे फागुणवदि ८ गुरौ वारे लिखितम् ।

**स्त०अन्तः**— सं० १९३७ ना आसाढमासे शुक्रपक्षे ११ गुरुवारे श्रीराजनग्रमध्ये लि०लैया माडवाडि ब्राह्मण पुष्करणा कला गुमानीरांमना पुत्र शिवदांन ॥

(प्रान्तेऽन्यदीयहस्तेन लिखितमेकविंशतिः श्रावकगुणस्थानवर्णनम् ।)

[ 457 ] **अन्तः**— संवत् १९४६ ना आसोज सुदि शुक्रवारे जैनशालामध्ये लिपिकृतं बारोट० हरीभाई मालजी पठनार्थं सा० मंगलदास मगनलाल ॥

[ 464 ] **अन्तः**— श्रीमत्श्रीपूर्णिमागच्छवारिधौ हिमरश्मयः ।

सूरीश्वरा भवन्ति स्म जयप्रभाभिधा वराः ॥१॥

तत्पट्टोदयशैलमौलिमुकुटालङ्कारहीरः स्फुरत्–

कारुण्यामृतसागरः सुखकरः प्रोद्यद्यशोभासुरः ।

जीयाद् भव्यजनाम्बुजे दिनकरः पुण्यद्रुमाम्भोधरः

श्रीमत्श्रीभुवनप्रभो गुरुवरः सौभाग्यभाग्याकारः ॥२॥

तेषां गुरूणां कमलाभिधेन शिष्येण पञ्चेषु च बाण-पृथ्वी(१५५५) ।

संज्ञे समे भाद्रपदाह्वमासे शुक्ले नवम्यां लिलिखेऽवचूरिः ॥३॥

[ 472 ] **टीकारम्भः**— ॐ छ कायना देश आश्री देस हुंती विरतः सापराद्ध निरापराद्ध आदिथी ।

**टीकान्तः**— सर्वदुर्त पातूयां कर्मनइं क्षय करीनइं सीतलीभूत थाइ ।

[ 487 ] **मू०अन्तः**— संवत् १५९८ माघसुदि ८ दिने श्रीचिन्तामणिखराणि पठनार्थं शुभं भवतु ।

[ 497 ] **बा०आदिः**— ततः—

कल्याणवल्लीततिवारिवाहं श्रीसिद्धिदत्तं प्रतिसार्थवाहम् ।

सत्केवलालोकदिनेशतुल्यं श्रीवर्द्धमानं प्रयतः प्रणौमि ॥१॥

श्रीमत्तपागच्छसरोमरालश्रीसाधुरत्नाभिधशिष्यलेशः ।

प्रकीर्णकस्यास्य करोति वार्त्तारूपं प्रबन्धं किल पार्श्वचन्द्रः ॥२॥

[ 501 ] **अन्तः**— पं०श्रीसागरगणिशिष्य–पं०श्रीआणन्दविजयगणिशिष्य-ग०हर्षविमलस्य प्रतिरियम् ।

[512] **अन्तः**— इति तपागच्छनभोमणिकलिकालगौतमावतारभट्टारकपुरन्दरश्री६आनन्दविमलसूरीश्वरचरणसरसीरुहरजश्चंचरीकायमाणपं०श्रीविजयविमलगणिरचितायां गच्छाचाराभिधप्रकीर्णकटीकायां श्रीगुरुपर्वक्रमवर्णनाधिकारः समाप्तः ॥

संवत् १९०४ प्रवर्तमाने आश्विनमासे शुभे कृष्णपक्षे पुन्यतिथौ १४ वारभृगुवासरे ॥

(अन्यदीयहस्तालेखनम्–)

मुनिमहाराजश्रीहर्षविजयजी लुधीआनेके भंडारकी ॥

[520] **अन्तः**— गाथासंयोजनार्थोयं प्रयासः केवलो मम ।
अर्थः सूक्तः स्फुटो ह्येष टीकाकृद्भिश्चिरंतनैः ॥
श्रीसिद्धप्राभृतकं समाप्तमिति ॥

[521] **मू०अन्तः**— सं[वत्]१८८६ वर्षे मिती श्रावणवदी ५ दिने पं०ज्ञानचन्द्रेण लिखितमस्ति बृहत्खरतराचार्यगच्छे(च्छे) श्रीजिनचन्द्रसूरिसा(शा)खायाम् ।

[527] **अन्तः**— लिखितं पंडितश्री ६ लक्ष्मीरुचिगणि–शिष्यविमलकुशलगणिना हीरकुशलमुनिपठनार्थम् ।

[528] **अन्तः**— संवत् १५२८ वर्षे ज्येष्ठवदि त्रयोदश्यां श्रीतपागच्छनायक–भट्टारकप्रभुश्रीश्रीश्रीरत्नशेखरसूरि–तत्पट्टालङ्कारविजयराज्ये श्रीश्रीलक्ष्मीसागरसूरि–शिष्यपंडितमंडलीमौलिमाणिक्यगणि–शिष्याऽनंतकीर्त्तिगणिना लिखितम् ॥
सर्वसहजगणिभणन–गणनकृते ॥श्री॥

[530] **अव०आदिः**— ॐ ॥देविंद०॥शोभनं विहितमनुष्ठानं येषां ते सुविहितास्तेषामुपकारिणीं० ।
**अन्तः**— इति सुविहितशिरोमणिजिनवल्लभगणिविरचितं पिंडविशुद्धिप्रकर्णा(रणा)वचूर्णिः ।

[531] **दीपिका–आदिः**— । ॐ नमोः अर्हं ॥
तं नमत श्रीवीरं जिनं यस्माच्चारित्रभूपतिर्जगति ।
बाह्यान्तरवैरिजया(? य)क्षमाधरैः सेव्यतेऽद्यापि ॥१॥
सुविहितविधिसूत्रधारः स जयति जिनवल्लभो गणिर्येन ।
पिंडविशुद्धिप्रकरणमकारि चारित्रनृपभवनम् ॥२॥
तस्मिन् विवरणदीपं दीप्रमधिस्नेहभाजनदाद् यः ।
सोऽपि परोपकृतिरतः सूरिर्जीयाद् यशोदेवः ॥३॥
तद्विवरणप्रदीपान्मया पदार्थाभिलाषिणा तत्र ।
मन्दमतिनेयमात्मप्रबुद्धये दीपिकोद्ध्रियते ॥४॥

तत्र विशुद्धसिद्धान्तसुधासारणिः श्रीजिनवल्लभगणिः संक्षिप्तरुचीनामनुमहार्थं पिंडैषणाध्ययनसारार्थं संगृह्य यतीनामाहारदोषोद्धरणं पिंडविशुद्धिप्रकरणं चिकीर्षुरादावेव कृताऽभीष्टदेवतानमस्कारां शुचिताभिधेयादित्रितयसारां गाथामाह–देविंदविंदवंदियं० ... ... ... ... ...

**मू० अन्तः**— इति विविधविलसदर्थं सुविशुद्धाहारमहितसाधुजनम् ।
श्रीजिनवल्लभरचितं प्रकरणमेतन्न कस्य मुदे ? ॥१॥

मादृशा इह प्रकरणे महार्थपंक्तौ विवेश बालोऽपि ।
यदुवृत्त्यंगुलिलग्नस्तं श्रयत गुरुं यशोदेवम् ॥२॥
आसीदिह चन्द्रकुले श्रीप्रभसूरिरागमधुरीणः ।
तत्पदकमलमरालः श्रीमाणिक्यप्रभाचार्यः ॥३॥
तच्छिष्योऽहं जडधीरात्मविदे सूरिरुदयसिंहाख्यः ।
पिंडविशुद्धेर्वृत्तिरुद्धे दीपिकामेनाम् ॥४॥
अनया पिंडविशुद्धेः दीपिकया साधवः करस्थितया ।
तस्यावलोककुशला दोषोत्थतमांस्यपहरन्तु ॥५॥
विक्रमतो वर्षाणां पञ्चनवत्यधिकरविमित(१२९५)शतेषु ।
विहितेयं स्तोकैरिह सूत्रयुता त्र्यधिकसप्तशती ॥६॥
एषा पिंडविशुद्धिसाधनधियां बोधात्मिका दीपिका
तत्त्वानां विशदप्रभापरिचयं दूरे हरन्ती तमः ।
श्रेयःश्रीकरसंगमेन दधती सत्पात्रशोभां परां
विद्वद्भिः स्वपरप्रकाशनकृते स्नेहेन संपुष्यताम् ॥७॥
मुनिना राजवल्लभेन स्वावलोकनाय पिंडविशुद्धिर्लिखिता । श्रेयोऽत्र ॥

[ 536 ] अन्तः— इति श्रीपिंडविशो(शु)ध्यवचूर्णिः ॥
मंडपदुर्गे धारायाम् । पं॰तिलकसुन्दरगणिशिष्यतिलककलशगणिना लिखितम् ॥ सं॰ १५१७ वर्षे ज्येष्ठमासे आदित्यवारे कृष्णपक्षे ६ दिने लि॰ ॥

[ 537 ] अन्तः— यच्चक्रे जिनवल्लभो दृढमतिः पिंडैषणागोचरं
प्रज्ञावर्जितमागमो प्रकृतये प्राज्यार्थमल्पाक्षरम् ।
शास्त्रं पिंडविशुद्धिसंज्ञितमिदं श्रीचन्द्रसूरिः स्फुटं
तद्वृत्तिं सुगमां चकार तनुधीः श्रीदेवतानुग्रहात् ॥१॥
वसु–मुनि–रुद्रै(११७८)र्युक्ते विक्रमवर्षे रवौ समाप्येषा ।
कृष्णैकादश्यां कार्त्तिकस्य योगे प्रशस्ते च ॥२॥
इति पिंडविशुद्ध्यवचूरिः समाप्ता ॥

[ 538 ] आदिः— ॥ ॐ नमः सिद्धम् । श्रीहीरविजयसूरिगुरुभ्यो नमः ॥
श्रीमद्वीरजिनेशं नत्वा श्रीसोमसुन्दरगुरुं च ।
पिंडविशुद्धेर्बालावबोधरूपं तनोम्यर्थम् ॥१॥

बा॰अन्तः— इति श्रीजिनवल्लभसूरिविरचितपिंडविशुद्धिप्रकरणस्यार्थो बालावबोधरूपः तपागच्छनायकश्रीसोमसुन्दरसूरि–शिष्यविजयमानभट्टारकप्रभुश्रीरत्नशेखरसूरि–शिष्य-पं॰संवेगदेवगणिना अर्थितः पिंडविशुद्धिबालावबोधः समाप्तः । मांडवगढे लिखितम् ॥
संवत् १६४९ वर्षे कार्त्तिकमासे शुक्लपक्षे दशमीदिने शुक्रवारे । पंडित-श्री६...चन्द्रगणि–शिष्यपंडित...चन्द्रगणिशिष्यगणिहेमचन्द्रलिखितं वाचनार्थम् ।

[ 542 ] अन्तः— श्रीसंवत् २०१० वर्षे माघशुक्लदशमी भृगुवासरे समाप्तम् ॥ श्रीमदणहिल्ल-पुरपत्तनवास्तव्यश्रीमालिविप्रज्ञाति-श्रीमल्लक्ष्मीशंकरात्मजगोवर्द्धनदासत्रिवेदिनेदं पुस्तकं लिपीकृतम् ॥

[ 544 ] अन्तः— अंगविद्याकी परत आत्मारामजी माहाराजने सेठश्री श्रीदलपतभाही(ई) भराई ।
संवत् १९४१ रा मीती मीगसरवद ८ भा(वा)र सोमवार ॥

[ 546 ] आदिः— ॥ ॐ ॥ आरम्भेसु नियत्ता सव्वदव्वेसु मुक्कवावारा ।
उच्छिण्णरागदोसा ते देवा देवयाणं पि ॥१॥

अन्तः— मा हवउ तस्स पावं सारावलीपुत्थयं लिहंतस्स ।
लहउ य असो य कित्ती अइरेणं साहुसक्कारो ॥११६॥
इति श्रीसारावलीप्रकीर्णकं समाप्तम् ॥
लिखितं च सौभाग्यसागरगणिना सा० रंगवृद्धिप[ठ]नार्थम् ॥

[ 550 ] अन्तः— इयं सुयहीलणुप्पायफलं फपला(?)जाणिऊण अन्ने व ।
जस्सभद्दे णियवयणे दढचित्तो होह पइदियहं ॥९॥
इति श्रीवंगचूलियाए अज्झयणं समाप्तम् ॥

स्त० अन्तः— ए श्रुतहेलनानो आयफल सघला फल जांणीनें जसोभद्रवचने जिन-धर्मने विषे दृढचित्त करे ।
इति श्रीवंगचूलियाअज्झयणं समाप्तम् ॥

[ 557 ] अन्तः— बृहत्तपापक्षे पूज्यश्रीजयशेखरसूरि-तत्पट्टे भट्टारकश्रीजिनरत्नसूरि-पंडितश्री-पुण्यकीर्तिगणयः । पंडित श्रीसाधुसुन्दरगणयः पंडितश्रीसोमधर्मगणयः । पंडितश्रीसोम-शीलगणिनाऽलीलिखत । संवत् १५९० वर्षे ज्येष्ठमासे शुक्लपक्षे २ गुरौ सलक्षणपुरे ॥

[ 558 ] अन्तः— संवत् १६४९ वर्षे मार्गसिरवदि ९ दिने रविवासरे लिखितं वटपद्रनगरे श्रीमन्महोपाध्यायश्रीश्री ४ विद्यासागरगणि-तत्पट्टप्रभाकरशिष्य—भुजिष्यपं०श्रीश्री-५ सहजसागरगणि-शिष्यगणिश्रीप्रकांडगणिश्री ४ ज्ञानसागर-तच्छिष्यगणिजस-सागरेणालेखि परउपगा(का)राय ॥

[ 569 ] स्त०अन्तः— संवत् १७६६ वर्षे शाके १६२८ प्रवर्त्तमाने श्रावणमासे कृष्णपक्षे एकादशी ११ शुक्रे इति मङ्गलम् । सूर्यपुरमध्ये लिपीचक्रे ।

[ 571 ] अन्तः— ग्रन्थाग्रम् १०७० ॥ श्रीतपागच्छाधीशभट्टारकपुरन्दरश्री४श्रीहीरविजयसूरीश्वर-सुश(शि)ष्यवाचकचक्रचूडामणिमहोपाध्यायश्रीसुमतिविजयगणि-शिष्यगणिविनय-विजयलिखितम् ॥

संवत् १६७७ वरखे मागशिरवदि १ बुध(धे) जसालिस्थाने । शुभं भवतु ॥

[ 572 ] आदिः— सिवसुहसिरीइ हेउ वन्दिय वीरं सुलद्धसुके(क)यफलं ।
संजममन्दिरहेउ भणामि आराहणारम्भे ॥१॥

अन्तः— अप्पक्खरा महत्था सुभव्वजीवाण अत्थि सिद्धिकरा ।
सासयसिवसुक्खफलं पज्जंतराहणा भणिया ॥२६॥
इति आराधनापताका ॥

[ 573 ] आदिः— लिन्नो महासमुद्दो तरियव्वं गोपयं तु हेयाणि ।
समइक्कंतो मेरू परमाणू चिट्ठए इन्हि ॥१॥

अन्तः— एवं खवउ कम्मचेणुवग्गहिओ तह परिसहचूणं ।
आइय अलंघणिज्जो झाणसमा(म)त्थो य जिणइ जइ ॥१०९॥
इति कवचद्वारं समाप्तम् ।

[575] आदिः— ॐ ॥ पहिलउं चैत्यवन्दन कीजइ । उसभाइ जिण पणउं । ए गाथा भणी पहिलउं त्रिकाल देव वादउं । अतीत अनागत वर्तमान त्रणि चुवीसी बहुत्तरि तीर्थंकर । हूं समरउं निरन्तर । हुयइ अतीतकालि । केवलज्ञान १। निर्वाणी २ । सागर ३ । महायश ४ । विमल ५ । सर्वानुभूति ६ । श्रीधर ७ । दत्त ८ । ... ... ...

अन्तः— जइ मे हुज्जपमाओ इमस्स देहस्स इमाइ वेलाए ।
आहारमुवहिदेहं चरमे समयम्मि वोसिरियं ॥५॥
हुज्जाइ मम समए उवक्कमो जीवियस्स जइ भज्जं ।
एयं पच्चक्खाणं विउला आराहणाहेउ ॥६॥
देवगुरुधर्म्मतणी नित्यमेव स्मरणा करिवी । जिम जीव रहइ सदैव मांगलिक माला संपजइ ।७।
इति आराधना समाप्ता ॥ ग्रन्थाग्रम् २३५ ॥

[579] आदिः— बीयाओ पुव्वाओ अग्गणीआ इमं सुयमुयारं ।
संसेइमसंमुच्छिमजीवाणं जाणिऊणयं(?) ॥१॥

अन्तः— संसत्तयनिज्जुत्ति एसा साहुहिं चेव पढियव्वा ।
अत्थो पुण सड्ढेहि सोयव्वो साहुपासाओ ॥२४॥
इति संसक्तनिर्युक्तिः समाप्ता ।
श्रीरस्तु सर्वसंघस्य तुष्टिपुष्टिरस्तु, लेखकस्य भद्रं भवतु ।

[580] आदिः— ॥ ॐ ॥ अर्हं नमः ॥
तित्थयरे मुणिनाहे मुक्खपहपए गए य सोंडीरे ।
खायगभावे वन्दे कम्मरयरहियजिणवीरे ॥१॥
नमिऊण गणहराई सुयनाणसमत्थपारगाईणं ।
पूयाविहि जह भणिया तह वंदणविहिं भणिस्सामि ॥२॥

अन्तः— वन्दणपयरण एसो समयाओ विहिपवायपुव्वाओ ।
संखेवेणुद्धरिओ रइओ मुणिभद्दबाहुणा ॥५५॥
इति वन्दणपइन्नं समत्तं ॥
थरादनयरे वीरप्रभुप्रसादात् लिपीकृतं मोहनविजया(येन) ॥ श्रीरस्तु ॥

स्त०आदिः— ॥ ॐ ॥ अर्हं नमः ॥
ति(ती)र्थना करनारा, मुनिना नाथ, मोक्षपदना मारगना देखाडनहारा, पराक्रमवन्त, क्षायकभावे विराजमान तिणा प्रते वांदुं कर्मरज करीने रहीत एहवा जीत्या रागद्वेष ते वीर प्रते वांदुं ॥१॥

**स्त० अन्तः**— वन्दनप्रकरण एह सिद्धान्त विधिप्रवाद नाम पूर्वथकी संक्षेपे करी उद्धर्यो रच्यो मुनि भद्रबाहुई ५५ । वन्दनपकर्णं(प्रकरण) भद्रबाहुनो करेलो थिरपुरनयरे वीरप्रभुप्रसादात् लिपिकृतं मोहनविजय ॥

[ 584 ] **अन्तः**— संवत् १६८३ वर्षे पोससुदि १४ जेसलमेरमध्ये पार्षः करमचन्द कचरांणी लिषत ॥

[ 585 ] **अन्तः**— संवत् १४९२ वर्षे पोषमासे कृष्णपक्षे १० दशम्यां तिथौ भृगुवासरेऽद्येह श्रीमदणहिल्लपत्तने पातसाहश्रीअहम्मदविजयराज्ये महामहनीयतमखरतरगच्छाधीश्वरभट्टारकश्रीजिनभद्रसूरीणां वाचनाय परोपकृतये च पुस्तकोऽयं पश्चाननेनालेखि ॥ २८००० ॥

[ 586 ] **आदिः**— श्रीज्ञातनन्दनं नत्वा स्मृत्वा च श्रुतदेवताम् ।
किञ्चिन्निशीथसूत्रस्य व्याख्यामाख्यामि हर्षवान् ॥१॥
अथ निशीथमिति कः शब्दार्थः । उच्यते—

[ 609 ] **अन्तः**— संवत् १५६४ वर्षे जे(ज्ये)ष्ठ सुदि १३ सोमे अद्येह पत्तने खरतरगच्छे श्रीजिनचन्द्रसूरीणां धर्म्मराज्ये श्रीबृहत्कल्पचूर्णिः ॥ लेखक मुहत्ता ज्ञाति माईदास लिपिकृतं श्रीनागोरमध्ये शुभं भवतु ॥

[ 611 ] **अन्तः**— ग्रन्थाग्रम् ११०००॥ संवत् १५६३ वर्षे वैशाषशुदि ७ सोमे श्रीअणहिल्लपुरश्रीपत्तने लष्य(लिखि)तम् ।

[ 612 ] **अन्तः**— सो संसारसंतति छिंदित्ता मोक्खं पाविति ॥
विशेषकल्पचूर्णिः समाप्ता । ग्रन्थाग्रम् ११०००॥

संवत् १४ आषा[ढा]दि ९६ वर्षे पौषमासे वलक्षपक्षे १५ पूर्णमास्यां रवावद्येह श्रीमदणहिल्लपत्तने खरतरगच्छालङ्कारभूतैः स्वाचारपालनचतुरैर्गच्छेश-श्रीजिनभद्रसूरिभिर्विशेषकल्पचूर्णेः पुस्तकोऽयं लेखयांचक्रे ॥

[ 615 ] **अन्तः**— संवत् १६६९ वर्षे० आसू सुदि ९ तिथौ आदित्यवारे ॥ बहुमङ्गलसूरबुधगुरुजनवर्गे श्रीमज्जेसलमेरुमहादुर्गस्वर्गे प्रवरतरन्यायोदयविधिधरणीपालनानुकृतश्रीरामे प्रस्फुरत्प्रचुरतरजगत्रयीकृताश्रयनिष्पापप्रतापसुरूपसहस्रधामाभिरामे निजरूपशोभावैभवतिरस्कृतकामे सुपुरितानेकविवेकशोकयाचकलोकमनःकामे । श्रीमज्जि—नाद्यादव कुलामलकमलिनीदलमरालबालश्रीभीमे निस्सीमभूमिरामेशे विजयीनि ।

इतश्च–श्रीखरतरविधिपक्षे श्रीमज्जिनभद्रसूरिपरम्पराशुक्तिकासंपुटमौक्तिकानुकारिश्रीजिनमाणिक्यसूरिपट्टोदयधारकेषु स्ववचनरचनारञ्जिताकबरसाहिप्रदत्तयुगप्रधानपदस्फारकेषु जलधिसकलजलचरजन्तुरक्षाकारकेषु कलिकालकलङ्कावलोकनकलुषीभूतमनस्समस्ता (?) नतुस्सागरांबरधरणीनिवेशितात्मप्रतापकोट्टपालसाहिसलेमबलिराजेन संतापितं श्रीवीरशासनं निराधारं प्रणष्टसकलसूरिपालनमालोक्य विशिष्टवचनामृतैस्तमाश्वास्याखण्डजैनशासनरक्षकविधायकेषु सवाईयुगप्रधानश्रीजिनचन्द्रसूरितत्पट्टोदयशैलसहस्रधामानुकारिषु श्रीसाहिकृतसूरिपदमहोत्सवविधिषु च[तु]र्दशविद्यावधूवरभोगविधीनभर्तृषु भट्टारकश्रीजिनसिंहसूरिविजयस्सु० ।

